तद्यदस्य तन्नामाऽकरोदादित्त्यस्तद्रूपमभवदादित्त्यो वा ऽईशान ऽआदित्त्यो ह्यस्य सर्वस्येष्टे सोऽब्रवीदेतावान्न्वा ऽअस्मि मामेतः परो नाम धा ऽइति ॥ १७ ॥ तान्न्येतान्न्यष्टाऽवग्निरूपाणि । कुमारो नवमः सैवाऽग्नेस्त्रिवृत्ता ॥ १८ ॥

यद्वेवाऽष्टावग्निरूपाणि । अष्टाक्षरा गायत्री तस्म्मादाहुर्ग्गायत्रोऽग्निरिति सोऽयं कुमारो रूपाण्ण्यनु प्प्राऽऽविशन्न वा ऽअग्निं कुमारमिव पश्यन्त्येतान्येवाऽस्य रूपाणि पश्यन्त्येतानि हि रूपाण्ण्यनु प्प्राऽऽविशत् ॥ १९ ॥ तमेतꣳ संवत्त्सरऽएव चिनुयात् । संवत्त्सरे*ऽनुब्रूयाद् द्वयोरित्त्यु हैक ऽआहुः संवत्त्सरे वै तद्रेतोऽसिञ्चन्त्स संवत्त्सरे कुमारोऽजायत तस्म्माद् द्वयोरेव चिनुयाद् द्वयोरनुब्रूयादिति संवत्त्सरे त्त्वेव चिनुयात्संवत्त्सरेऽनुब्रूयाद्यद्वाऽवरेतः सिक्तं तदेव जायते तत्ततो विक्रियमाणमेव वृर्द्धमानꣳ शेते तस्म्मात्संवत्त्सरऽएव चिनुयात्संवत्त्सरेऽनुब्रूयात्तस्य चितस्य नाम करोति पाप्प्मानमेवाऽस्य तदुपहन्ति चित्रनामानं करोति चित्रोऽसीति सर्वाणि हि चित्राण्ण्यग्निः ॥ २० ॥ (C)

प्रथमाध्याये तृतीयं ब्राह्मणम् ॥ ३ ॥

इति प्रथमोऽध्यायः ॥ १ ॥



* ऐ० आ० ५. ३. ३. ४ ।

(c) एतद्ब्राह्मणस्था विषया अन्यत्राऽप्युपलभ्यन्ते यथा— का० श० ८. १. ३ ।

[ अथ पुरुषाश्वादिपञ्चपश्वालम्भनविधिः ]

( तत्र चतुर्विंशतिसामिधेन्यादिः, इष्टकोपधानादिकं च )

प्रजापतिरग्निरूपाण्यभ्यध्यायत् । स यो ऽयं कुमारो रूपाण्यनु प्प्रविष्ट ऽआसीत्तमन्न्वैच्छत्सो ऽग्निरवेदनु वै मा पिता प्प्रजापतिरिच्छति हन्त तद्रूपमसानि यन्न्मऽएष न व्वेदेति ॥ १ ॥ स ऽएतान्न्पञ्च पशूनपश्श्यत् । * पुरुषमश्वं गामविमजं यदपश्श्यत्तस्मादेते पशवः ॥ २ ॥ स ऽएतान्न्पञ्च पशून्न्प्राऽऽविशत् । स ऽएते पञ्च-पशवोऽभवत्तमु वै प्प्रजापतिरन्न्वेवैच्छत् ॥ ३ ॥ स ऽएतान्न्पञ्च पशूनपश्श्यत् । यदपश्श्यत्तस्मादेते पशवस्तेष्वेतमपश्श्यत्तस्माद्वेवैते पशवः ॥ ४ ॥ स ऽऐक्षत । इमे वा ऽअग्निरिमानेवाऽऽत्मानमभिसंस्करवै यथा वा ऽअग्निः समिद्धो दीप्प्यत ऽएवमेषां चक्षुर्द्दीप्प्यते यथाऽग्नेर्द्धूम ऽउदयतऽएवमेषामूष्मोदयते यथाऽग्निरभ्याहितं दहत्त्येवं बप्प्सति यथाऽग्नेर्भस्म्म सीदत्त्येवमेषां पुरीषः सीदतीमे वा ऽअग्निरिमानेवाऽऽत्मानमभिसंस्करवा ऽइति तान्नाना देवताभ्यऽआलिप्प्सत वैश्वकर्म्मणं पुरुषं व्वारुणमश्वमैन्द्रमृषभं त्वाष्ट्रमविमाग्नेयमजः ॥ ५ ॥ स ऽऐक्षत । नाना वा ऽइदं देवताभ्य ऽआलिप्प्सेऽग्नेर्वहः रूपाणि कामये हन्तैनानग्निभ्यः कामायाऽऽलभा ऽइति तानग्निभ्यः कामायाऽऽलभत तद्यदग्निभ्य ऽइति बहूनि ह्यग्निरूपाण्यभ्यद्ध्यायदथ यत्कामायेति कामेन ह्यालभत तानाप्प्रीतान्न्पर्य्यग्निकृतानु-

* का० श्रौ० सू० १६. १. ५ ।

दीचो नीत्वा समज्ञपयत् ॥६॥ स ऽऐक्षत । या वै *श्रीरब्भ्युधासिषमिमास्ताः शीर्षसु हन्त शीर्षाण्ण्येवोपदधा ऽइति स शीर्षाण्ण्येवोत्क्कृत्त्योपाऽऽधत्ताऽथेतराणि कुसिन्धान्न्यप्प्सु प्प्राऽप्लावयदजेन यज्ञः समस्त्थापयन्नेत्त्वमे यज्ञो विक्कुष्ट्टोऽसदित्यात्मा वै यज्ञो नेत्त्वमेऽयमात्मा विक्कुष्ट्टोऽसदित्त्येतेन पशुनेष्ट्वा तत्प्रजापतिरपश्श्यद्यथैतस्याऽग्नेरन्तं न पर्य्यैत् ॥ ७ ॥ सऽऐक्षत । यमिममात्मानमप्प्सु प्प्राऽपिप्लवं तमन्न्विच्छानीति तमन्वैच्छत्तद्यदेषामप्प्सु प्प्रविद्धानां प्रत्त्यतिष्ठत्ता ऽअपः समभरदथ यदस्यां तां मृदं तदुभयः सम्भृत्त्य मृदं चाऽपश्चेष्ट्टकामकरोत्तस्म्मादेतदुभयमिष्टका भवति मृच्चाऽऽपश्च ॥ ८ ॥ स ऽऐक्षत । यदि वा ऽइदमित्त्थमेव सदात्मानमभिसंस्करिष्ष्ये मर्त्त्यः कुणपोऽनपहतपाप्प्मा भविष्ष्यामि हन्तैनदग्निना पचानीति तदग्निनाऽपचत्तदेनदमृतमकरोदेतद्वै हविरमृतं भवति यदग्निना पचन्ति तस्म्मादग्निनेष्टकाः पचन्त्यमृता ऽएवैनास्तत्कुर्वन्ति ॥ ९ ॥ तद्यदिष्ट्वा पशुनाऽऽपश्श्यत् । तस्म्मादिष्टकास्तस्म्मादिष्ट्वैव पशुनेष्टकाः कुर्य्यादनिष्टका ह ता भवन्ति याः पुरा पशोः कुर्वन्त्यथो ह तदन्न्यदेव ॥ १० ॥ तद्यास्ताः श्रियः । एतानि तानि पशुशीर्षाण्ण्यथ यानि तानि कुसिन्धान्न्येतास्ताः पञ्च चितयस्तद्यत्पशुशीर्षाण्ण्युपधाय चितीश्चिनोत्त्येतैरेव तच्छीर्षभिरेतानि कुसिन्धानि सन्दधाति ॥११॥ तऽएते सर्वे पशवो यदग्निः । तस्म्मादग्नौ पशवो रमन्ते पशु-

* 'श्रीरभ्युध्यासिषम्' इति पाठः 'क' पुस्तके ।

भिरेव तत्पशवो रमन्ते तस्माद्यस्य पशवो भवन्ति तस्मिन्नग्निराधीयतेऽग्निर्ह्येष यत्पशवस्ततो वै प्रजापतिरग्निरभवत् ॥ १२ ॥ तद्धैक आहुः । अत्रैवैतैः सर्वैः पशुभिर्यजेत यद्वाऽएतैरत्र सर्वैः प्रजापतिरयक्ष्यत तद्देवाऽग्नेरन्तं पर्यैष्यत्तद्यदेतैरत्र सर्वैर्यजेत तद्देवाऽग्नेरन्तं परीयादिति न तथा कुर्य्याद्देवानां तदितादियादथो पथस्तदियादथो किं ततः सम्भरेदेतानि वा ऽएतत्कुसिन्धान्न्येताश्चितीः सम्भरति तस्मात्तथा न कुर्य्यात् ॥ १३ ॥ यद्वेवैतान्पशूनालभते । आयतनमेवैतदग्नये करोति न ह्यनायतने कश्चन रमतेऽन्नं वाऽआयतनं तदेतत्पुरस्तान्निदधाति तदेनं पश्यन्नग्निरुपाऽऽवर्त्तते ॥ १४ ॥ पुरुषोऽश्वोगौरविरजो भवन्ति । एतावन्तो वै सर्वे पशवोऽन्नं पशवस्तद्यावदन्नं तदेतत्पुरस्तान्निदधाति तदेनं पश्यन्नग्निरुपाऽऽवर्त्तते ॥ १५ ॥ पञ्च भवन्ति । पञ्च ह्येतेऽग्नयो यदेताश्चितयस्तेभ्य ऽएतत्पञ्चाऽऽयतनानि निदधाति तदेनं पश्यन्नग्निरुपाऽऽवर्त्तते ॥१६॥ तद्यदग्निभ्यऽइति बहवो ह्येतेऽग्नयो यदेताश्चितयोऽथ यत्कामायेति यथा तं काममाप्नुयाद्यजमानो यत्काम ऽएतत्कर्म्म कुरुते ॥ १७ ॥ पुरुषं प्रथममालभते। पुरुषो हि प्रथमः पशूनामथाऽश्वं पुरुषᳪं ह्यन्वश्वोऽथ गामश्वᳪं ह्यनु गौरथाऽविं गाᳪं ह्यन्वविरथाऽजमविᳪं ह्यन्वजस्तदेनान्यथापूर्वं यथाश्रेष्ठमालभते ॥ १८ ॥ तेषां विषमा रशनाः स्युः । पुरुषस्य वर्षिष्ठाऽथ ह्रसीयस्यथ ह्रसीयसी तद्यथारूपं पशूनाᳪं रशनाः करोत्यपापवस्यसाय सर्वास्त्वेव समाः स्युः सर्वाः सदृश्यः

सर्वे ह्येते समाः सर्वे सदृशा ऽअग्नयो ह्युच्यन्तेऽन्नꣳ ह्युच्यन्ते तेन समास्तेन सदृशाः ॥ १९ ॥ तदाहुः । कथमस्यैषोऽग्निः पञ्चेष्टकः सर्वः पशुष्वारब्धो भवतीति पुरोडाशकपालेष्वेवाऽऽप्यत ऽइयं प्रथमा मृन्मयीष्टकाऽथ यत्पशुमालभेत तेन पश्विष्टकाऽऽप्यतेऽथ यद्वपामभितो * हिरण्यशकलौ भवतस्तेन हिरण्येष्टकाऽऽप्यतेऽथ यदिध्मो यूपः परिधयस्तेन वानस्पत्येष्टकाऽऽप्यतेऽथ यदाज्यं प्रोक्षण्यः पुरोडाशस्तेनाऽन्नं पञ्चमीष्टकाऽऽप्यत ऽएवमु हाऽस्यैषोऽग्निः पञ्चेष्टकः सर्वः पशुष्वारब्धो भवति ॥ २० ॥ तेषां चतुर्विंशतिः सामिधेन्यः । चतुर्विंशत्यर्द्धमासो वै संवत्सरः संवत्सरोऽग्निर्यावानग्निर्यावत्यस्य मात्रा तावतैवैनमेतत्समिन्धे ॥ २१ ॥ यद्वेव चतुर्विंशतिः । चतुर्विंशत्यक्षरा वै गायत्री गायत्रोऽग्निर्यावानग्निर्यावत्यस्य मात्रा तावतैवैनमेतत्समिन्धे ॥ २२ ॥ यद्वेव चतुर्विंशतिः । चतुर्विंशो वै पुरुषो दश हस्त्या ऽअङ्गुलयो दश पाद्याश्चत्वार्यङ्गानि पुरुषः प्रजापतिः प्रजापतिरग्निर्यावानग्निर्यावत्यस्य मात्रा तावतैवैनमेतत्समिन्धे ॥ २३ ॥ उभयीर्गायत्रीश्च त्रिष्टुभश्चाऽन्वाह । प्राणो गायत्र्यात्मा त्रिष्टुप्प्राणमेवाऽस्य गायत्रीभिः समिन्ध ऽआत्मानं त्रिष्टुब्भिर्मध्ये त्रिष्टुभो भवन्त्यभितो गायत्र्यो मध्ये ह्ययमात्माऽभित प्राणाः भूयसीः पुरस्ताद्गायत्रीरन्वाह कनीयसीरु-

* "जुह्वामुपस्तीर्य हिरण्यशकलमवधाय कृत्स्नां वपामवदाय हिरण्यशकलमुपरिष्टात्कृत्वाऽभिघारयति" ( आप० श्रौ० सू० १६. १७ ) ।

परिष्टाद्भूयाᳬंसो हीमे पुरस्तात्प्राणाः कनीयाᳬंस ऽउपरिष्टात् ॥ २४ ॥ * सोऽन्वाह । 'समास्त्वाग्न ऽऋतवो वर्द्धयन्त्वि'ति प्रजापतिं विस्रस्तं यत्राऽग्निः समदधात्तमब्रवीद्या मत्सम्मिताः सामिधेन्यस्ताभिर्म्मा समिन्त्स्वेति ॥ २५ ॥ स ऽएता ऽअपश्यत् । समास्त्वाऽग्न ऽऋतवो वर्द्धयन्त्वि'ति समाश्च त्वाऽग्न ऽऋतवश्च वर्द्धयन्त्वित्त्येत-'त्संवत्सरा ऽऋषयो यानि सत्ये'ति संवत्सराश्च त्वर्षयश्च सत्यानि च वर्द्धयन्त्वित्त्येत'त्सं दिव्येन दीदिहि रोचनेने'त्यसौ वा ऽआदित्यो दिव्यः रोचनं तेन सन्दीदिहीत्त्येत-'द्विश्वा ऽआभाहि प्प्रदिशश्चतस्र' ऽइति सर्वा ऽआभाहि प्प्रदिशश्चतस्र ऽइत्त्येतत् ॥ २६ ॥ ता ऽएता ऽएकव्याख्यानाः । एतमेवाऽभि यथेऽऽतमेव संस्कुर्य्यादेतः सन्दध्यादेतं जनयेत्ता ऽआग्नेय्यः प्प्राजापत्त्या यदग्निरपश्यत्तेनाऽऽग्नेय्यो यत्प्रजापतिः समैन्ध तेन प्प्राजापत्त्याः ॥२७॥ द्वादश † ऽऽप्रियः । द्वादश मासाः संवत्सरः संवत्सरोऽग्निर्य्यावानग्निर्य्यावत्त्यस्य मात्रा तावतैवैनमेतदाप्प्रीणाति ॥ २८ ॥ यद्वेव द्वादश । द्वादशाक्षरा वै जगतीयं वै जगत्त्यस्याः हीदः सर्वं जगदियमु वा ऽअग्निरस्यै हि सर्वोऽग्निश्चीयते यावानग्निर्य्यावत्त्यस्य मात्रा तावतैवैनमेतदा-

* समिध्यमान-समिद्धवत्यन्तरेण "समास्त्वाग्न" इति नव दधाति" ( का० श्रौ० सू० १६. १. ११ ) ।

( १ ) शु० सं० अ० २७ क० १ । ( २ ) शु० सं० अ० २७ क० १ । ( ३ ) शु० सं० अ० २७ क० १ । ( ४ ) शु० सं० अ० २७ क० १ ।

† अथात आप्रियः । आप्रियः कस्मात् ? आप्नोतेः, प्रीणातेर्वा । 'आप्रीभिराप्रीणाति' इति च ब्राह्मणम् ( निरु० ८. १. ४. ) ।

प्प्रीणाति ॥ २९ ॥ यद्वेव द्वादश । द्वादशाक्षरा वै जगती जगती सर्व्वाणि च्छन्दाꣳसि सर्व्वाणि च्छन्दाꣳसि प्प्रजापतिः प्प्रजापतिरग्निर्य्यावानग्निर्य्यावत्त्यस्य मात्रा तावतैवैनमेतदाप्प्रीणाति ॥३०॥ ता * ऽएता '[1]ऽऊर्द्ध्वा ऽअस्य समिधो भवन्ती'ति । प्रजापतिं व्विस्त्रस्तं य्यत्राऽग्निः समदधात्तमब्रवीद्या मत्त्सम्मिता ऽआप्प्रियस्ताभिर्म्माऽऽप्प्रीणीहीति ॥ ३१ ॥ सऽएता ऽअपश्श्यत् । 'ऊर्द्ध्वा ऽअस्य समिधो भवन्ती'त्यूर्द्ध्वा ह्येतस्य समिद्धस्य समिधो भव'न्त्यूर्द्ध्वा [2]शुक्रा शोचीꣳष्ष्यग्नेरि'त्यूर्द्ध्वानि ह्येतस्य शुक्राणि शोचीꣳष्ष्यर्चीꣳषि भवन्ति '[3]द्युमत्तमे'ति व्वीर्य्यवत्तमेत्त्येत'त्सु[4]प्प्रतीकस्ये'ति सर्व्वतो वाऽअग्निः सुप्प्रतीकः '[5]सूनोरिति' यदेनं जनयति तेनाऽस्यैष सूनुः ॥ ३२ ॥ ता ऽएता ऽएकव्व्याख्यानाः । एतमेवाऽभि यथैतमेव संस्कुर्य्यादेतꣳ सन्दद्ध्यादेतं जनयेत्ता ऽआग्नेय्यः प्प्राजापत्त्या यदग्निरपश्श्यत्तेनाऽऽग्नेय्यो यत्प्रजापतिमाप्प्रीणात्तेन प्प्राजापत्त्याः ॥३३॥ ता व्विषमा व्विषमपदाः । व्विषमाक्षरा व्विषमाणि हि च्छन्दाꣳस्यथो यान्न्यस्याऽध्यात्त्ममङ्गानि व्विषमाणि तान्न्यस्यैताभिराप्प्रीणाति ॥ ३४ ॥ व्वैश्वानरः पशुपुरोडाशः । वैश्वानरो वै सर्व्वेऽग्नयः सर्व्वेषामग्नीनामुपाऽऽप्त्यै ॥ ३५ ॥ यद्वेव वैश्वानरः । ऋतवो हैते यदेताश्चितयोऽग्नयो वा ऽऋतव ऽऋतवः संवत्सरः संवत्सरो

* "आप्रियो द्वादशोर्ध्वा अस्येति" ( का० श्रौ० सू० १६. १. १२ )।

( १ ) शु० सं० अ० २७ क० ११। ( २ ) शु० सं० अ० २७ क० ११। ( ३ ) शु० सं० अ० २७ क० ११। ( ४ ) शु० सं० अ० २७ क० ११। ( ५ ) शु० सं० अ० २७ क० ११।

वैश्वानरो यदग्नय ऽइति स्यादिति तद्रेचयेद् द्वादशकपालो द्वादश मासाः संवत्सरः संवत्सरो वैश्वानर ऽआग्नेय्यो याज्यानुवाक्या ऽअग्निरूपाणामुपाऽऽप्त्यै कामवत्यः कामानामुपाऽऽप्त्यै ॥३६॥ तद्धैके। इत्येवैतानि पशुशीर्षाणि बिल्वोपद्धत्युभयेनैते पशव ऽइति ते ह ते मर्त्याः कुणपाः सम्भवन्त्यनाप्रीतानि हि तानि तद्ध तथाऽऽषाढः सौश्रोमते यस्योपदधुः स ह क्षिप्र ऽएव ततो ममार ॥ ३७ ॥ हिरण्मयान्यु हैके कुर्वन्ति। अमृतेष्टका ऽइति वदन्तस्ता ह ता ऽअनृतेष्टका न हि तानि पशुशीर्षाणि ॥ ३८ ॥ मृन्मयान्यु हैके * कुर्वन्ति । उत्सन्ना वा ऽएते पशवो यद्वै किञ्चोत्सन्नमियं तस्य सर्वस्य प्रतिष्ठा तद्यत्रैते पशवो गतास्तत ऽएनानधि सम्भराम ऽइति न तथा कुर्य्याद्यो वा ऽएतेषामावृतं च ब्राह्मणं च न विद्यात्तस्यैत ऽउत्सन्नाः स्युः स ऽएतानेव पञ्च पशूनालभेत यावदस्य वशः स्यात्तान्हैतान्प्रजापतिः प्रथम ऽआलेभे श्यापर्णः सायकायनोऽन्तमोऽथ ह स्मैतानेवाऽन्तरेणाऽऽलभन्तेऽथैतर्हीमौ द्वावेवाऽऽलभ्येते प्राजापत्यश्च वायव्यश्च तयोरतो ब्राह्मणमुच्यते ॥ ३९ ॥ (A)

## द्वितीयाध्याये प्रथमं ब्राह्मणम् ॥ १ ॥

माध्यन्दिनीये शतपथब्राह्मणे प्रथमः प्रपाठकः ॥ १ ॥

कण्डिकासंख्या ॥ ११० ॥



* का० श्रौ० सू० १६. १. ३६–४१ ।

(A) एतद्ब्राह्मणस्था विषया अन्यत्राऽप्युपलभ्यन्ते यथा—का० श० ८. २. १; कठ० सं० १८. १६, १७; कपि० २९. ४. ४; मै० सं० ११. १२. ५, ६; तै० सं० ४. १. ७, ८ ।

[ अथ प्राजापत्यादिपश्वनुष्ठानसम्प्रदायः ]

( तत्र प्राजापत्यपशुः, वायव्यपशुः, पश्वालम्भकालः, उखासम्भरणविधिश्च )

प्राजापत्यं चरका ऽआलभन्ते । प्रजापतिरग्निं चित्वाऽग्निरभवत्तद्यदेतमालभते तद्देवाऽग्नेरन्तं पर्यैतीति ॥ १ ॥ श्यामो * भवति । द्वयानि वै श्यामस्य लोमानि शुक्लानि च कृष्णानि च द्वन्द्वं मिथुनं प्रजननं तदस्य प्राजापत्यꣳ रूपं तूपरो भवति तूपरो हि प्रजापतिः ॥ २ ॥ तस्यैकविꣳशतिः सामिधेन्यः । द्वादश मासाः पञ्चर्त्तवस्त्रय ऽइमे लोका ऽअसावादित्य ऽएकविꣳश ऽएष प्रजापतिः प्रजापतिरग्निरुर्षावानग्निरुर्षावत्यस्य मात्रा तावतैवैनमेतत्समिन्धे ॥ ३ ॥ षड्वैकविꣳशतिः । एकविꣳशो वै पुरुषो दश हस्त्या ऽअङ्गुलयो दश पाद्या ऽआत्मैकविꣳशः पुरुषः प्रजापतिः प्रजापतिरग्निरुर्षावानग्निरुर्षावत्यस्य मात्रा तावतैवैनमेतत्समिन्धे ॥ ४ ॥ उभयीर्गायत्रीश्च त्रिष्टुभश्चाऽन्वाह । तासामुक्तो बन्धुरुक्तम्वेवाऽन्वृचꣳ † हिरण्यगर्भवत्याघारमाघारयति प्रजापतिर्वै ‡ हिरण्यगर्भः प्रजापतिरग्निर्द्वादशाऽप्रियस्तासामुक्तो बन्धुरुक्तम्वेवाऽन्वृचं प्राजापत्यः पशुपुरोडाशो ष ऽएव पशोर्बन्धुः स पुरोडाशस्य द्वादशकपालो द्वादशमासाः संवत्सरः संवत्सरः प्रजापतिः कद्वत्यो याज्यानुवाक्याः को हि प्रजापतिः ॥ ५ ॥ अथैतं वायवे नियुत्वते । शुक्लं तूपरमालभते प्रजापतिः

* का० श्रौ० सू० १६. १. ३३।
† का० श्रौ० सू० १६. १. ३५, ३७।
‡ तै० सं० १. ७. ६,६।

प्प्रजाः सृष्ट्वाऽनुव्व्यैक्षत तस्याऽत्त्यानन्देन रेतः परापतत्त्सोऽजः शुकूलस्तूपरो लप्प्सुद्यभवद्रसो वै रेतो या वाऽनु वै रसस्ता-वानात्त्मा तद्यदेतमालभते तदेवाऽग्नेरन्तं पर्य्येति शुकूलो भवति शुकूलꣳ हि रेतस्तूपरो भवति तूपरꣳ हि रेतो व्वायवे भवति प्प्राणो वै व्वायुर्न्नियुत्त्वते भवत्त्युदानो वै नियुतः प्प्रा-णोदानावेवाऽस्मिन्नेतद्दधाति ॥ ६ ॥ यद्वेवैतं व्वायवे नियुत्त्वते। शुक्कं तूपरमालभंते प्प्रजापतिं व्विस्रस्तं रुयत्र देवाः समस्कु-र्व्वन्त्स योऽस्स्मात्त्प्राणो मध्यत ऽउदक्रामत्तमस्मिन्नेतेन पशुनाऽऽदधुस्तथैवाऽस्मिन्नयमेतद्दधाति व्वायवे भवति प्प्राणो वै व्वायुर्न्नियुत्त्वते भवत्त्युदानो वै नियुतः प्प्राणोदानावेवा-ऽस्मिन्नेतद्दधाति शुक्को भवति शुक्को हि व्वायुस्तूपरो भवति तूपरो हि वायुः ॥ ७ ॥ तस्य सप्तदश सामिधेन्न्यः। सप्तदशो वै संव्वत्त्सरो द्वादशमासाः पञ्चऽर्त्तवः संव्वत्त्सरः प्प्रजापतिः प्प्रजापतिरग्निरुर्य्यावानग्निरुर्य्यावत्त्यस्य मात्रा ताव-त्तैवैनमेतत्त्समिन्धे ॥ ८ ॥ यद्वेव सप्तदश। सप्तदशो वै पुरुषो दश प्प्राणाश्चचत्त्वार्य्यङ्गान्न्यात्त्मा पञ्चदशो ग्रीवाः षोडश्श्यः शिरः सप्तदशं पुरुषः प्प्रजापतिः प्प्रजापतिरग्नि-रुर्य्यावानग्निरुर्य्यावत्त्यस्य मात्रा तावत्तैवैनमेतत्त्समिन्धे ॥ ९ ॥ उभयीर्ग्गायत्त्रीश्च्च त्रिष्टुभश्च्चाऽन्न्वाह । तासामुक्तो बन्धुरुक्तम्वेवाऽन्न्वृचं द्वादशाऽऽप्प्रियस्तासामुक्तो बन्धुरुक्तम्वे-वाऽन्न्वृचं *प्राजापत्त्यः पशुपुरोडाशोऽत्रो स काम ऽउपाऽऽप्त-ऽइुति ह स्म्माऽऽह माहित्थिरुर्य चरकाः प्प्राजापत्त्ये पशा-

*का० श्रौ० सू० १६. १. ३९।

वाहुरिति ॥ १० ॥ यद्वेव वायव्यः पशुर्भवति । प्राजापत्यः पशुपुरोडाशोऽर्द्धं ह प्रजापतेर्वायुरर्द्धं प्रजापतिस्तद्यदुभौ वायव्यौ स्यातामुभौ वा प्राजापत्यावर्द्धं हैवाऽस्य कृतः स्यान्नार्द्धमथ यद्वायव्यः पशुर्भवति प्राजापत्यः पशुपुरोडाशस्तेन हैवैतः सर्वं कृत्स्नं प्रजापतिः संस्करोति ॥ ११ ॥ यद्वेव वायव्यः पशुर्भवति । प्राजापत्यः पशुपुरोडाशः प्रजापतिं विस्रस्तं यत्र देवाः समस्कुर्वन्त्स यो ऽस्मात्प्राणो मध्यत ऽउदक्रामत्तमस्मिन्नेतेन पशुनाऽऽदधुरथाऽस्यैतेन पुरोडाशेनाऽऽत्मानः समस्कुर्वन्त्स यत्प्राजापत्यो भवति प्रजापतिर्ह्यात्मा द्वादशकपालो द्वादशमासाः संवत्सरः संवत्सरः प्रजापतिः कद्वत्यौ याज्यानुवाक्ये को हि प्रजापतिः ॥१२॥ तद्यद्वपां* पुरस्ताज्जुहोति । य ऽएवाऽयं पुरस्तात्प्राणस्तमस्मिन्नेतद्दधात्यथ यदेतेन मध्यतश्चरन्ति मध्यतो ह्ययमात्माऽथ यद्धविषोपरिष्टाच्चरन्ति य ऽएवाऽयमुपरिष्टात्प्राणस्तमस्मिन्नेतद्दधाति शुक्रवत्यो याज्यानुवाक्याः स्युः शुक्ररूपाणामुपाऽऽप्त्यै नियुत्वत्यो यदेव नियुत्वद्रूपं तस्योपाऽऽप्त्यै ॥ १३ ॥ तदु वा ऽआहुः । वपाया ऽएव शुक्रवत्यौ स्यातामेतावद्धि पशौ शुक्रं यद्वपा शुक्रवत्यौ नियुत्वत्यौ हविषो यदेव नियुत्वद्रूपं तस्योपाऽऽप्त्या ऽइति ॥ १४ ॥ यद्वेवैतं पशुमालभते । एतस्मिन्ह पशौ सर्वेषां पशूनाᳩ रूपं यत्तूपरो लप्सुदी तत्पुरुषस्य रूपं तूपरो हि लप्सुदी पुरुषो यत्तूपरः केसरवाँस्तदश्वस्य रूपं तूपरो हि केसरवा-

* कद्वत्यो याज्यानुवाक्याः प्राजापत्यस्य ( का० श्रौ० सू० १६. १. ४०–४३ )।

नश्वो यदष्टाशफस्तद्गोरूपमष्टाशफो हि गौरथ यदस्याऽवेरिव शफास्तदुवे रूपं यदजस्तदजस्य तद्यदेतमालभते तेन हैवाऽस्यैते सर्वे पशव ऽआलब्धा भवन्त्यतो यतमदस्य कर्म्मोपकल्पेतै ते वा पञ्चपशव ऽएष वा प्राजापत्य ऽएष वा नियुत्त्वतीयः ॥ १५ ॥ तं * पौर्ण्णमास्यामालभेत । अमावास्यायामालभेतेत्यु हैक ऽआहुरसौ वै चन्द्रः प्रजापतिः स ऽएताᳬं रात्रिमिह वसति तद्यथोपतिष्ठन्तमालभेतैवं तदिति ॥ १६ ॥ तद्वै पौर्ण्णमास्यामेव । असौ वै चन्द्रः पशुस्तं देवाः पौर्ण्णमास्यामालभन्ते यत्रैनं देवा ऽआलभन्ते तदेनमालभा ऽइति तस्मात्पौर्ण्णमास्यां यद्वेव पौर्ण्णमास्यां पौर्ण्णमासी ह वाऽव प्रथमा व्युवास तस्माद्वेव पौर्ण्णमास्याम् ॥ १७ ॥ तद्वै फाल्गुन्यामेव । एषा ह संवत्सरस्य प्रथमा रात्रिर्यत्फाल्गुनी पौर्ण्णमासी योत्तरैषोत्तमा या पूर्वा मुखत ऽएव तत्संवत्सरमारभते ॥ १८ ॥ स वा ऽइष्ट्वैव पौर्ण्णमासेन । अथ पशुमालभते पौर्ण्णमासेन वा ऽइन्द्रो वृत्रं पाप्मानᳬं हत्वाऽपहतपाप्मैतत्कर्म्माऽऽरभत तथैवैतद्यजमानः पौर्ण्णमासेनैव वृत्रं पाप्मानᳬं हत्वाऽपहतपाप्मैतत्कर्म्माऽऽरभते ॥ १९ ॥ तद्वा † ऽउपाᳬंशु भवति । एतद्धैतैः प्रजापतिः पशुभिः कर्म्मैयेष तद्धाऽत्राऽनद्धेवैवासाऽनिरुक्तमिव तस्मादुपाᳬंशुः ॥ २० ॥ यद्वेवोपाᳬंशु । प्राजापत्यं वा ऽएतत्कर्म्म प्रजापतिᳬं ह्येतेन कर्म्मणाऽऽरभतेऽनिरुक्तो

* का० श्रौ० सू० १६. १. ५-७।

† का० श्रौ० सू० १६. १. २५, २६।

वै प्प्रजापतिः ॥ २१ ॥ यद्वेवोपाथंशु । रेतो वा ऽअत्र यज्ञ ऽउपाथंशु वै रेतः सिच्च्यते व्वपा पशुपुरोडाशो हविरेतावान्न्हि पशुः ॥२२॥ अष्टकायामुखाथं * सम्भरति । प्राजापत्त्यमेतदुहर्य्यदुष्टका प्प्राजापत्त्यमेतत्कर्म्म यदुखा प्प्राजापत्त्य ऽएव तदुहन्न्प्राजापत्त्यं कर्म्म करोति ॥ २३ ॥ यद्वेवाऽष्टकायाम् । पर्व्वैतत्संवत्त्सरस्य यदुष्टका पर्व्वैतदग्नेर्य्यदुखा पर्व्वण्ण्येव तत्पर्व्व करोति ॥ २४ ॥ यद्वेवाऽष्टकायाम् । अष्टका वा ऽउखा निधिर्द्वा ऽउद्धी तिरश्ची † रास्ना तश्चतुश्चतस्र ऽऊर्द्ध्वास्तदष्टावष्टकायामेव तदुष्टकां करोति ॥ २५ ॥ ‡ अमावास्यायां दीक्षते । अमावास्यायै वा ऽअधि यज्ञस्तायते यतो यज्ञस्तायते ततो यज्ञं जनयानीति ॥ २६ ॥ यद्वेवाऽमावास्यायाथं । रेतो वा ऽएतद्भूतमात्मानः सिञ्चत्युखायां य्योनौ यद्दीक्षते तस्म्मा ऽएतं पुरस्ताल्लोकं करोति यद्दीक्षितो भवति तं कृतं लोकमभिजायते तस्म्मादाहुः कृतं लोकपुरुषोऽभि जायत ऽइति ॥ २७ ॥ स यत्कनीयः संवत्त्सराद्दीक्षितः स्यात् । अलोका ऽइष्टका ऽउपदद्ध्यादिष्टका लोकानतिरिच्च्येरन्नथ यद्भूयसो लोकान्न्कृत्त्वेष्टका नाऽनूपदद्ध्याल्लोका ऽइष्टका ऽअतिरिच्च्येरन्नथ यदमावास्यायां दीक्षित्त्वाऽमावास्यायां क्रीणाति तद्यावन्तमेव लोकं करोति तावतीरिष्टका ऽउपदधात्यथाऽस्याऽऽपूर्य्यमाणपक्षे सर्व्वोऽग्निश्चीयते ॥ २८ ॥

* का० श्रौ० सू० १६. २. १ ।
† का० श्रौ० सू० १६. ३. ३१ ।
‡ अत्र शतम् ३५००; का० श्रौ० सू० १६. ४. २७ ।

तदाहुः । यद्यावत्य ऽएतस्याऽग्नेरिष्टकास्तावन्ति क्रयेऽहोरात्राणि सम्पद्यन्तेऽथ यान्न्यूर्द्ध्वानि क्रयादुहानि कथमस्यते लोका ऽअनूपहिता भवन्तीति यद्वा ऽअमावास्यायां दीक्षित्वाऽमावास्यायां क्रीणाति तद्यावन्तमेव लोकं करोति तावतीरिष्टका ऽउपदधात्यथ यान्न्यूर्द्ध्वानि क्रयादुहानि तस्मिन्नवकाशेऽद्ध्वर्य्युरग्निं चिनोति क्वो हि चिनुयान्न च सोऽवकाशः स्याद्यावन्ति वै संवत्सरस्याऽहोरात्राणि तावत्य ऽएतस्याऽग्नेरिष्टका ऽउप च त्रयोदशो मासस्त्रयोदशो वा ऽएष मासो यान्न्यूर्द्ध्वानि क्रयादुहानि तद्या ऽअमूस्त्रयोदशस्य मास ऽइष्टकास्ताभिरस्य ते लोका ऽअनूपहिता भवन्ति तत्समा लोकाश्चेष्टकाश्च भवन्ति ॥ २९ ॥ एतद्द् वै यैव प्प्रथमा पौर्णमासी । तस्यां पशुमालभते या प्प्रथमाऽष्टका तस्यामुखाᳬं सम्भरति या प्प्रथमाऽमावास्या तस्यां दीक्षत ऽएतद्वै यान्न्येव संवत्सरस्य प्प्रथमान्न्यहानि तान्न्यस्य तदारभते तानि च तदाप्नोत्यथाऽतः सम्पदेव ॥ ३० ॥ तदाहुः । कथमस्यैतत्कर्म्म संवत्सरमग्निमाप्नोति कथᳬं संवत्सरेणाऽग्निना सम्पद्यत ऽइत्त्येतेषां वै पञ्चानां पशूनां चतुर्विᳬंशतिः सामिधेन्यो द्वादशाऽऽप्रियस्तत्षट्त्रिᳬंशदेकादशाऽनुयाजा * ऽएकादशोपयजस्तदष्टा पञ्चाशत् ॥३१॥ ततो याऽष्टाचत्त्वारिᳬंशत् । साऽष्टाचत्त्वारिᳬंशदक्षरा जगतीयं वै जगत्त्यस्याᳬं हीदᳬं सर्वं जगदियमु वा ऽअग्निरस्यै हि सर्वोऽग्निश्चीयते यावानग्निर्य्यावत्त्यस्य मात्रा तावत्तद्

* आप० श्रौ० सू० ७, २७, ११ ।

भवति ॥ ३२ ॥ षट्त्वेवाऽष्टाचत्त्वारिᳬशत् । अष्टाचत्त्वारिᳬशदक्षरा वै जगती जगती सर्वाणि च्छन्दाᳫंसि सर्वाणिच्छन्दाᳫंसि प्प्रजापतिः प्प्रजापतिरग्निरुर्ग्वावानग्निरुर्ग्वावित्त्यस्य मात्रा तावत्तद् भवति ॥ ३३ ॥ अथ यानि दश । सा दशाक्षरा विराड्विराडग्निर्द्दश दिशो दिशोऽग्निर्द्दश प्प्राणाः प्प्राणा ऽअग्निरुर्ग्वावानग्निरुर्ग्वावित्त्यस्य मात्रा तावत्तद् भवति ॥ ३४ ॥ वपा पशुपुरोडाशः । तत्त्षष्टिः षष्टिर्म्मासस्याऽहोरात्राणि तन्म्मासमाप्प्नोति मास ऽआप्त ऽऋतुमाप्प्नोत्यृतुः संवत्त्सरं तत्त्संवत्त्सरमग्निमाप्प्नोति ये च संवत्त्सरे कामा ऽअथ यदतोऽन्न्यद्यदेव संवत्त्सरेऽन्नं तत्तत् ॥ ३५ ॥ अथैतस्य प्प्राजापत्त्यस्य । एकविᳬशतिः सामिधेन्न्यो द्वादशाऽऽप्प्रियस्तत्त्रयस्त्रिᳬशदेकादशाऽनुयाजाऽएकादशोपयज तत्त्पञ्च पञ्चाशद्वपा पशुपुरोडाशो हविस्तदष्टापञ्चाशत्त्स योऽष्टापञ्चाशति कामोऽत्रैव तमाप्प्नोति द्वावाघारौ तत्त्षष्टिः स यः षष्ट्यां कामोऽत्रैव तमाप्प्नोत्त्यथ यदतोन्न्यद्यदेव संवत्त्सरेऽन्नं तत्तत् ॥ ३६ ॥ अथैतस्य नियुत्त्वतीयस्य । सप्तदश सामिधेन्न्यो द्वादशाऽऽप्प्रियस्तदेकां न त्रिᳬशदेकादशानुयाजा ऽएकादशोपयजस्तदेकपञ्चाशद्वपा पशुपुरोडाशो हविस्तच्चतुष्पञ्चाशद् द्वावाघारौ द्वौ स्विष्टकृतौ तदष्टापञ्चाशत्त्स योऽष्टापञ्चाशति कामोऽत्रैव तमाप्प्नोति वनस्प्पतिश्च वसाहोमश्च तत्त्षष्टिः स यः षष्ट्यां कामोऽत्रैव तमाप्प्नोत्त्यथ यदतोऽन्न्यद्यदेव संवत्त्सरेऽन्नं तत्तदेवमु हाऽस्यैतत्कर्म्म संवत्त्सरमग्निमाप्प्नो-

न्त्येवᳪ संवत्सरेणाऽग्निना सम्पद्यते ॥ ३७ ॥ तदाहुः । नैतस्य पशोः समिष्टयजूᳪषि जुहुयान्न हृदयशूलेनाऽवभृथमभ्यवेयादारम्भो वा ऽएषोऽग्नेः पशुर्व्यवसर्गो देवतानाᳪ समिष्टयजूᳪषि सᳪस्थाऽवभृथो नेदारम्भे देवता व्यवसृजानि नेद्यज्ञᳪ सᳪस्थापयानीति स वै समेव स्थापयेदेतेन पशुनेष्ट्वा तत्प्रजापतिरपश्यद्यथैतस्याऽग्नेरन्तं न पर्यैत्तस्मात्सᳪस्थापयेद्यद्वेव सᳪस्थापयति प्राण ऽएष पशुस्तस्य यदन्तरियात्प्राणस्य तदन्तरियाद्यदु वै प्राणस्याऽन्तरियात्तत ऽएवं म्रियेत तस्मात्समेव स्थापयेदथाऽतो व्रतानामेव ॥ ३८ ॥ तदाहुः । नैतेन पशुनेष्ट्वोपरि शयीत* न माᳪसमश्नीयान्न मिथुनमुपेयात्पूर्वदीक्षा वा ऽएष पशुरनवक्लृप्तं वै तद्यदीक्षित ऽउपरि शयीत यन्माᳪसमश्नीयाद्यन्मिथुनमुपेयादिति नेत्त्वेवैषा † दीक्षा नेव हि मेखलाऽस्ति न कृष्णाजिनमिष्टकां वा ऽएतां कुरुते तस्मादु काममेवोपरि शयीतैतदु सर्वमन्नं यदेते पशवस्तदस्याऽत्राऽऽत्तमारब्धं भवति तद्यानि कानि चाऽमधुनोऽशनानि तेषामस्य सर्वेषां कामाशनं यदि लभेत मिथुनं तु नोपेयात्पुरा मैत्रावरुण्यै पयस्यायै तस्योपरि बन्धुः ॥ ३९ ॥ तदाहुः । दद्यादेतस्मिन्यज्ञे दक्षिणां नेन्मेऽयं यज्ञोऽदक्षिणोऽसद् ब्रह्मण ऽआदिष्टदक्षिणां दद्याद् ब्रह्मा वै सर्वो यज्ञस्तदस्य सर्वो यज्ञो भिषज्जयितो भवतीति न

* "मैथुनं वर्जयेदापयस्यायाः, मांसोपर्यासने चेच्छन्" (का० श्रौ० सू० १६. १. ८, ९) ।

† 'मेखलया दीक्षयति' 'कृष्णाजिनेन दीक्षयति' इति दीक्षाविधानादत्रोभयोरभावादियं दीक्षा न भवतीति ( तै० सं० ६. १. ३. १४ ) स्पष्टम् ।

तथा कुर्य्यादिष्टकां वा ऽएतां कुरुते तद्यथेष्टकामिष्टकायां दध्यात्तादृक्तदमुर्ह्येव दध्याद्यदस्योपकल्पेत ॥४०॥ (B)

द्वितीयाध्याये द्वितीयं ब्राह्मणम् ॥ २ ॥



[ चितीनामृषिदेवतासम्बन्धेनोत्पत्तिप्रकारः ]

एतद्वै देवा ऽअब्रुवन् । चेतयध्वमिति चितिमिच्छतेति वाऽव तदब्रुवँस्तेषां चेतयमानानां प्रजापतिरिमां प्रथमाꣳ स्वयमातृण्णां चितिमपश्यत्तस्मात्तां प्रजापतिनोपदधाति ॥ १ ॥ तमग्निरब्रवीत् । उपाऽहमायानीति केनेति पशुभिरिति तथेति पश्विष्टकया ह तदुवाचैषा वाऽव पश्विष्टका यद्दूर्वेष्टका तस्मात्प्रथमायै स्वयमातृण्णाया ऽअनन्तर्हिता दूर्वेष्टकोपधीयते तस्मादस्या ऽअनन्तर्हिता ऽओषधयोऽनन्तर्हिताः पशवोऽनन्तर्हितोऽग्निरनन्तर्हितो ह्येष ऽएतयोपैत् ॥ २ ॥ तेऽब्रुवन् । चेतयध्वमेवेति चितिमिच्छतेति वाऽव तदब्रुवन्नित ऽऊर्ध्वमिच्छतेति तेषां चेतयमानानामिन्द्राग्नी च विश्वकर्म्मा चाऽन्तरिक्षं द्वितीयाꣳ स्वयमातृण्णां चितिमपश्यँस्तस्मात्तामिन्द्राग्निभ्यां च विश्वकर्म्मणा चोपदधाति ॥ ३ ॥ तान्वायुरब्रवीत् । उपाऽहमायानीति केनेति दिग्भिरिति तथेति दिश्याभिर्ह तदुवाच तस्माद् द्वितीयायै स्वयमातृण्णाया ऽअनन्तर्हिता दिश्या-ऽउपधीयन्ते तस्मादन्तरिक्षादनन्तर्हिता दिशोऽनन्तर्हितो

(B) एतद्ब्राह्मणस्था विषया अन्यत्राऽप्युपलभ्यन्ते यथा— का० श० ८. २. २।

वायुरनन्तर्हितो ह्येष ऽएताभिरुपैत् ॥ ४ ॥ तेऽब्रुवन् । चेतयध्वमेवेति चितिमिच्छतेति वाऽव तदब्रुवन्नित ऽऊर्ध्वमिच्छतेति तेषां चेतयमानानां परमेष्ठी दिवं तृतीयाꣳ स्वयमातृण्णां चितिमपश्यत्तस्मात्तां परमेष्ठिनोपदधाति ॥ ५ ॥ तमसावादित्योऽब्रवीत् । उपाऽहमायानीति केनेति लोकम्पृणयेति तथेत्येष वाऽव लोकम्पृणाऽऽत्मना हैव तदुवाच तस्मात्तृतीया स्वयमातृण्णानन्तर्हितालोकम्पृणाया ऽउपधीयते तस्मादसावादित्योऽनन्तर्हितो दिवोऽनन्तर्हितो ह्येष ऽएतयोपैत् ॥ ६ ॥ तदेता वाऽव षड् देवताः । इदꣳ सर्वमभवन्यदिदं किञ्च ते देवाश्चर्षयश्चाऽब्रुवन्निमा वाऽव षड् देवता ऽइदꣳ सर्वमभूम्नुप तज्जानीत यथा वयमिहाऽप्यसामेति तेऽब्रुवँश्चेतयध्वमिति चितिमिच्छतेति वाऽव तदब्रुवँस्तदिच्छत यथा वयमिहाऽप्यसामेति तेषां चेतयमानानां देवा द्वितीयां चितिमपश्यन्नृषयश्चतुर्थीम् ॥ ७ ॥ तेऽब्रुवन् । उप वयमायामेति केनेति यदेषु लोकेषूपेति तथेति तद्यदूर्ध्वं पृथिव्या ऽअर्वाचीनमन्तरिक्षात्तेन देवा ऽउपाऽयँस्तदेषा द्वितीया चितिरथ यदूर्ध्वमन्तरिक्षादर्वाचीनं दिवस्तेनर्षय ऽउपायँस्तदेषा चतुर्थी चितिः ॥ ८ ॥ ते यदब्रुवन् । चेतयध्वमिति चितिमिच्छतेति वाऽव तदब्रुवन्यच्चेतयमाना ऽअपश्यँस्तस्माच्चितयः ॥ ९ ॥ प्रजापतिः प्रथमां चितिमपश्यत् । प्रजापतिरेव तस्याऽआर्षेयं देवा द्वितीयां चितिमपश्यन्देवा ऽएव तस्याऽआर्षेयमिन्द्राग्नी च विश्वकर्मा च तृतीयां चितिमपश्यँस्त-

ऽएव तस्या ऽआर्षेयमृषश्चतुर्थीं चितिमपश्यन्नृषय ऽएव तस्या ऽआर्षेयं परमेष्ठी पञ्चमीं चितिमपश्यत्परमेष्ठ्येव तस्या ऽआर्षेयꣳ स यो हैतदेवं चितीनामार्षेयं वेदाऽऽर्षेयवत्यो हाऽस्य बन्धुमत्यश्चितयो भवन्ति ॥ १० ॥ (C)

द्वितीयाध्याये तृतीयं ब्राह्मणम् ॥ ३ ॥

इति द्वितीयोऽध्यायः ॥ २ ॥



[ सावित्रहोमः ]

एतद्वै देवा ऽअब्रुवन्। चेतयध्वमिति चितिमिच्छतेति वाऽव तदब्रुवँस्तेषां चेतयमानानाꣳ सवितैतानि सावित्राण्यपश्यद्यत्सविताऽपश्यत्तस्मात्सावित्राणि स ऽएता मष्टागृहीतामाहुतिमजुहोत्ताꣳ हुत्वेमामष्टधाविहितामषाढामपश्यत्पुरैव सृष्टाꣳ सतीम् ॥१॥ ते यदब्रुवन्। चेतयध्वमिति चितिमिच्छतेति वाऽव तदब्रुवन्यच्चेतयमाना ऽअपश्यँस्तस्माच्चितिराहुतिर्वै यज्ञो यदिष्ट्वाऽपश्यत्तस्मादिष्टका ॥२॥ [ अर्धप्रपाठकः ५२ ॥ ] तां वा ऽएताम्। एकाꣳ * सतीमष्टागृहीतामष्टाभिर्यजुर्भिर्जुहोति तस्मादियमेका सत्यष्टधा विहिता ॥ ३ ॥ तामूर्ध्वामुद्गृह्णन् जुहोति। इमाꣳ तदूर्ध्वाꣳ रूपैरुद्गृह्णाति तस्मादियमूर्ध्वा रूपैः ॥४॥ ताꣳ सन्ततां जुहोति। एतद्वै देवा ऽअबिभयुर्यद्वैन ऽइह रक्षाꣳसि नाष्ट्रा

(C) एतद्ब्राह्मणस्था विषया अन्यत्राऽप्युपलभ्यन्ते यथा— का० श० ८. २. ३।
* "यजुरष्टमाभिर्ऋग्भिरेकामाहुतिं जुहोति" ( आप० श्रौ० सू० १६. १. ४ )।

नाऽन्ववेयुरिति त ऽएतᳪ सन्ततहोममपश्यन् रक्षसां नाष्ट्राणामनन्ववायनाय तस्मात्सन्ततां जुहोति ॥५॥ यद्वे-वैतामाहुतिं जुहोति। सवितैषोऽग्निस्तमेतयाऽऽहुत्या पुरस्तात्प्रीणाति तमिष्ट्वा प्रीत्वाऽथैनᳪ सम्भरति तद्यदेतया सवितारं प्रीणाति तस्मात्सावित्राणि तस्माद्वा ऽएतामाहुतिं जुहोति ॥ ६ ॥ यद्वेवैतामाहुतिं जुहोति। सवितैषोऽग्निस्तमेतयाऽऽहुत्या पुरस्ताद्रेतो भूतᳪ सिञ्चति यादृग्वै योनौ रेतः सिच्यते तादृग्जायते तद्यदेतया सवितारᳪ रेतो भूतᳪ सिञ्चति तस्मात्सावित्राणि तस्माद्वा ऽएतामाहुतिं जुहोति ॥ ७ ॥ स्रुवश्चाऽत्र स्रुक्च प्रयुज्येते। वाग्वै स्रुक्प्राणः स्रुवो वाचा च वै प्राणेन चैतदग्रे देवाः कर्म्माऽन्वैच्छँस्तस्मात्स्रुवश्च स्रुक्च ॥ ८ ॥ यद्वेव स्रुवश्च स्रुक्च। यो वै स प्रजापतिरासीदेष स स्रुवः प्राणो वै स्रुवः प्राणः प्रजापतिरथ या सा वागासीदेषा सा स्रुग्योषा वै वाग्योषा स्रुगथ यास्ता ऽआप-ऽआयन्वाचो लोकादेतास्ता यामेतामाहुतिं जुहोति ॥ ९ ॥ ताᳪ सन्ततां जुहोति। सन्तता हि ता ऽआप ऽआयन्नथ यः स प्रजापतिस्त्रय्या विद्यया सहाऽपः प्राऽऽविशदेष स यैरेतद्यजुर्भिर्जुहोति ॥ १० ॥ तद्यानि त्रीणि प्रथमानि। इमे ते लोका ऽअथ यच्चतुर्थं यजुस्त्रयी सा विद्या जगती सा भवति जगती सर्वाणि च्छन्दाᳪसि सर्वाणि च्छन्दाᳪसि त्रयी विद्याऽथ यानि चत्वार्युत्तमानि दिशस्तानीमे च वै लोका दिशश्च प्रजापतिरथैषा त्रयी

व्विद्या ॥ ११ ॥ स * जुहोति । 'युञ्जानः प्प्रथमं मन' ऽइति प्प्रजापतिर्व्वै युञ्जानः स मन ऽएतस्म्मै कर्म्मणे-ऽयुङ्क्त तद्यन्मन ऽएतस्मै कर्म्मणेऽयुङ्क्त तस्मात्प्रजा-पतिर्य्युञ्जानः ॥ १२ ॥ 'तत्त्वाय सविता धिय' ऽइति । मनो वै सविता प्प्राणा धियो 'ऽग्नेर्ज्ज्योतिर्न्निचाय्ये'त्यग्नेर्ज्ज्यो-तिर्द्दृष्ट्वेत्त्येत'त्पृथिव्व्या ऽअध्याभरदि'ति पृथिव्व्यै ह्येन-दध्याभरति ॥ १३ ॥ 'युक्तेन मनसा वयमि'ति । मन-ऽएवैतदेतस्मै कर्म्मणे युङ्क्ते न ह्ययुक्तेन मनसा किञ्चन सम्प्रति शक्नोति कर्त्तुं 'देवस्य सवितुः सव' ऽइति देवेन सवित्रा प्प्रसूता ऽइत्येत'त्स्वर्ग्ग्याय शक्त्येति' यथैतेन कर्म्मणा स्वर्ग्गं लोकमियादेवमेतदाह शक्त्येति शक्त्या हि स्वर्ग्गं लोकमेति ॥ १४ ॥ 'युक्त्वाय सविता देवानि'ति । मनो वै सविता प्प्राणा देवाः 'स्वर्य्यतो धिया दिवमि'ति स्वर्ग्गं ह्य हैनां लोकं यतो धियैतस्म्मै कर्म्मणे युयुजे 'बृहज्ज्योतिः

---

* चयनं चिकीर्षन् फाल्गुनकृष्णप्रतिपदि पौर्णमासेष्टिं सम्पाद्य पुरुषाश्वगोऽव्यजानालभ्याजेन यागं विधाय पुरुषादि-पञ्चपशूनां शिरांसि घृतेनाऽभ्यज्य प्रथमचितावुपधानार्थं क्वचित् संस्थाप्य तेषां कबन्धान्यजशेषं च मृद्युक्ते तडागादिजले प्रक्षिपेत् । उखानिर्माणार्थं इष्टकानिर्माणार्थं च मृदं जलं तत एवाऽऽदेयम् । ततः फाल्गुनकृष्णाष्टम्यामुखानिर्माणम् । तदर्थमाहवनीयदक्षिणाग्नी उद्धृत्याऽऽहवनीयात्प्राक् कृते चतुष्कोणे गर्त्ते ततस्तडागान्मृत्पिण्डमानीय भूसमं स्थापयेत् । पिण्डा-हवनीयान्तराले सच्छिद्रां वल्मीकमृदं निदध्यात् । आहवनीयाद्दक्षिणप्रान्तेऽश्वगर्दभाजाः प्राङ्मुखाः प्रागपराः मुञ्जरसनाबद्धा स्थाप्याः । आहवनीयोत्तरे वैणव्युभयतस्तीक्ष्णा कल्माषी हिरण्मयी वाऽभ्रिः स्थाप्या । ततः 'अष्टागृहीतं जुहोति सन्ततमुद्गृह्णन् युञ्जान इति' ( म॰ भा॰ का॰ श्रौ॰ सू॰ १६. २. ७ ) ।

(१) शु॰ सं॰ अ॰ ११ क॰ १ । (२) शु॰ सं॰ अ॰ ११ क॰ १ । (३) शु॰ सं॰ अ॰ ११ क॰ १ । (४) शु॰ सं॰ अ॰ ११ क॰ १ । (५) शु॰ सं॰ अ॰ ११ क॰ २ । (६) शु॰ सं॰ अ॰ ११ क॰ २ । (७) शु॰ सं॰ अ॰ ११ क॰ २ । (८) शु॰ सं॰ अ॰ ११ क॰ ३ । (९) शु॰ सं॰ अ॰ ११ क॰ ३ । (१०) शु॰ सं॰ अं॰ ११ क॰ ३ ।

करिष्यत' ऽइत्यसौ वा ऽआदित्यो बृहज्ज्योतिरेष ऽउ-ऽएषोऽग्निरेतम्वेते संस्करिष्यन्तो भवन्ति 'सविता प्प्रसुवाति तानी'ति सवितृप्प्रसूता ऽएतत्कर्म्म करवन्नित्येतत् ॥ १५ ॥

'युञ्जते मन ऽउत युञ्जते धिय' ऽइति । मनश्चैवैतत्प्राणां-श्चैतस्मै कर्म्मणे युङ्क्ते 'विप्प्रा विप्रस्ये'ति प्रजापतिर्वै विप्प्रो देवा विप्प्रा 'बृहतो विपश्चित' ऽइति प्प्रजापतिर्वै बृहन्विपश्चि'द्वि होत्रा दध' ऽइति यद्वा ऽएष चीयते तदेष होत्रा विधत्ते चिते ह्येतस्मिन् होत्रा ऽअधिविधीयन्ते 'वयुनाविदि'त्येष हीदं वयुनमविन्द'देक ऽइदि'त्येको ह्येष-ऽइदꣳ सर्वं वयुनमविन्द'न्मही देवस्य सवितुः परिष्टुति-रि'ति महती देवस्य सवितुः परिष्टुतिरित्येतत् ॥ १६ ॥

'युजे वां ब्रह्म पूर्व्यं नमोभिरि'ति । प्राणो वै ब्रह्म पूर्व्य-मन्नं नमस्तत्तदेषैवाऽऽहुतिरन्नमेतयैव तदाहुत्यै तेनाऽन्नेन प्प्राणानेतस्मै कर्म्मणे युङ्क्ते 'विश्लोक ऽएतु पथ्येव सूरेरि'ति यथोभयेषु देवमनुष्येषु कीर्त्तिश्लोको यजमानस्य स्यादेवमेतदाह 'श्रृण्वन्तु विश्वे ऽअमृतस्य पुत्रा' ऽइति प्प्रजापतिर्वा ऽअमृतस्तस्य विश्वे देवाः पुत्रा 'ऽआये धामानि दिव्यानि तस्थुरि'तीमे वै लोका दिव्यानि धामानि तद्य ऽएषु लोकेषु देवास्तानेतदाह ॥ १७ ॥ 'यस्य प्प्रयाण-

(१) शु० सं० अ० ११ क० ३। (२) शु० सं० अ० ११ क० ४। (३) शु० सं० अ० ११ क० ४। (४) शु० सं० अ० ११ क० ४। (५) शु० सं० अ० ११ क० ४। (६) शु० सं० अ० ११ क० ४। (७) शु० सं० अ० ११ क० ४। (८) शु० सं० अ० ११ क० ४। (९) शु० सं० अ० ११ क० ५। (१०) शु० सं० अ० ११ क० ५। (११) शु० सं० अ० ११ क० ५। (१२) शु० सं० अ० ११ क० ५। (१३) शु० सं० अ० ११ क० ६।

मन्वन्न्य ऽइद्ययुरि'ति । प्रजापतिर्व्वा ऽएतदग्रे कर्म्माऽकरोत्त-त्ततो देवा ऽअकुर्व्व'न्देवा देवस्य महिमानमोजसे'ति यज्ञो वै महिमा देवा देवस्य यज्ञं वीर्य्यमोजसेत्त्येत'द्यः पार्थिवानि विममे स ऽएतश' ऽइति यद्वै किञ्चाऽस्यां तत्पार्थिवं तदेष सर्व्वं विमिमीते रश्मिभिर्ह्येनदभ्यवतनोति 'रजाᳬसि देवः सविता महित्त्वने'तीमे वै लोका रजाᳬस्यसावादित्त्यो देवः सविता तानेष महिम्ना विमिमीते ॥ १८ ॥ 'देव सवितः प्रसुव यज्ञं प्रसुव यज्ञपतिं भगाये'ति । असौ वा ऽआदित्त्यो देवः सविता यज्ञो भगस्तमेतदाह प्रसुव यज्ञं प्रसुव यज्ञपतिं भगायेति 'दिव्यो गन्धर्व्वः केतपूः केतं नः पुनात्वि'त्त्यसौ वा ऽआदित्त्यो दिव्यो गन्धर्व्वोऽन्नं केतोऽन्नपूरन्नं नः पुनात्त्वित्त्येत'द्वाचस्पतिर्व्वाचं नः स्वदत्वि'ति वाग्वा ऽइदं कर्म्म प्राणो वाचस्पतिः प्राणो न-ऽइदं कर्म्म स्वदत्त्वित्त्येतत् ॥ १९ ॥ 'इमं नो देव सवित-र्य्यज्ञं प्रणये'ति । असौ वा ऽआदित्त्यो देवः सविता यदु वा ऽएष यज्ञियं कर्म्म प्रणयति तदुनात्त्र्तᳬ स्वस्त्युदृचमश्नुते 'देवाव्यमि'ति यो देवानवदित्त्येत'त्सखिविदᳬ सत्राजितं धनजितᳬ स्वर्जितमि'ति य ऽएतत्सर्व्वं विन्दादित्त्येतदृचे'त्यृचां स्तोमᳬ समर्द्धय गायत्रेण रथन्तरं बृहद्गायत्रवर्त्तनी'ति सामानि 'स्वाहे'ति यजूᳬषि सैषा त्रयी विद्या

(१) शु० सं० अ० ११ क० ६। (२) शु० सं० अ० ११ क० ६। (३) शु० सं० अ० ११ क० ६। (४) शु० सं० अ० ११ क० ७। (५) शु० सं० अ० ११ क० ७। (६) शु० सं० अ० ११ क० ७। (७) शु० सं० अ० ११ क० ८। (८) शु० सं० अ० ११ क० ८। (९) शु० सं० अ० ११ क० ८। (१०) शु० सं० अ० ११ क० ८। (११) शु० सं० अ० ११ क० ८।

प्प्रथमं जायते यथैवाऽदोऽमुत्राऽजायतैवमथ यः सोऽग्नि-रसृज्यतैष स योऽत ऽऊर्द्ध्वमग्निश्चीयते ॥ २० ॥ तान्ये-तान्न्यष्टौ सावित्राणि । अष्टाक्षरा गायत्री गायत्रोऽग्नि-र्य्यावानग्निर्य्यावत्त्यस्य मात्रा तावतैवैनमेतद्रेतो भूतः सिञ्चति तानि नव भवन्ति स्वाहाकारो नवमो नव दिशो दिशोऽग्निर्न्नव प्प्राणाः प्प्राणा ऽअग्निर्य्यावानग्निर्य्यावत्त्य मात्रा तावतैवैनमेतद्रेतो भूतः सिञ्चति तानि दश भवन्त्या-हुतिर्द्दशमी दशाक्षरा विराड्विराडग्निर्द्दश दिशो दिशो-ऽग्निर्द्दश प्प्राणाः प्प्राणा ऽअग्निर्य्यावानग्निर्य्यावत्त्यस्य मात्रा तावत्तद्भवति ॥ २१ ॥ एतस्यामाहुत्याᳬ हु-तायाम् । अग्निर्द्देवेब्भ्य ऽउदक्रामत्ते देवा ऽअब्रुवन्पशुर्व्वा-ऽअग्निः पशुभिरिममन्विच्छाम स स्वाय रूपायाऽविर्ब्भवि-ष्यतीति तं पशुभिरन्न्वैच्छन्त्स स्वाय रूपायाऽविरभव-त्तस्मादु हैतत्पशुः स्वाय रूपायाऽविर्ब्भवति गौर्वा गवेऽश्वो वाऽश्वाय पुरुषो वा पुरुषाय ॥ २२ ॥ तेऽब्रुवन् । यद्यह सर्वैरन्न्वेषिष्यामो यातयामा ऽअनुपजीवनीया भविष्यन्ति यद्यु ऽअसर्वैरसर्वमनुवेत्स्याम ऽइति त ऽएतमेकं पशुं द्वाब्भ्यां पशुब्भ्यां प्रत्यपश्यन्रासभं गोश्चाऽवेश्च तद्यदेतमेकं पशुं द्वाब्भ्यां पशुब्भ्यां प्रत्यपश्यँस्तस्मादेष ऽएकः सन्द्वि-रेताः ॥ २३ ॥ अनद्धा पुरुषं पुरुषात् । एष ह वा ऽअनद्धा-पुरुषो यो न देवानवति न पितॄन्न मनुष्यास्तँत्सर्वैरह पशुभिरन्न्वैच्छन्नो यातयामा ऽअनुपजीवनीया ऽअभवन् ॥ २४ ॥ त्रिभिरन्न्विच्छति । त्रिवृदग्निर्य्यावानग्निर्य्यावत्त्यस्य

मात्रा तावत्तैवैनमेतद्दुद्दिवच्छति ते पञ्च सम्पदा भवन्ति पञ्चचितिकोऽग्निः पञ्चर्त्तवः संवत्सरः संवत्सरोऽग्निर्य्यावानग्निर्य्यावत्यस्य मात्रा तावत्तद्भवति ॥ २५ ॥ ते मौञ्जीभिरभिधानीभिरभिहिता भवन्ति । अग्निर्देवेभ्यऽउदक्रामत्स मुञ्जं प्राऽऽविशत्तस्मात्स सुषिरस्तस्माद्वेवाऽन्तरतो धूमरक्त ऽइव सैषा योनिरग्नेर्यन्मुञ्जोऽग्निरिमे पशवो न वै योनिर्गर्भꣳ हिनस्त्यहिꣳसायै योनेर्वै जायमानो जायते योनेर्ज्जायमानो जायाता ऽइति ॥ २६ ॥ त्रिवृतो भवन्ति । त्रिवृद्ध्यग्निरश्वाभिधानीकृता भवन्ति सर्वतो वा ऽअश्वाभिधानी मुखं परिशेते सर्वतो योनिर्गर्भं परिशेते योनिरूपमेतत्क्रियते ॥ २७ ॥ ते प्राञ्चस्तिष्ठन्ति । अश्वः * प्रथमोऽथ रासभोऽथाऽजऽएवꣳ ह्येतेऽनुपूर्वं यद्वै तदश्रु सङ्क्षरितमासीदेष सोऽश्वोऽथ यत्तद्रसदिवैष रासभोऽथ यः स कपाले रसो लिप्तऽआसीदेष सोऽजोऽथ यत्तत्कपालमासीदेषा सा मृद्यामेतदाहरिष्यन्तो भवन्त्येतेभ्यो वा ऽएष रूपेभ्योऽग्रेऽसृज्यत तेभ्य ऽएवैनमेतज्जनयति ॥ २८ ॥ ते दक्षिणतस्तिष्ठन्ति । एतद्वै देवा ऽअबिभयुर्यद्वै नो यज्ञं दक्षिणतो रक्षाꣳसि नाष्ट्रा न हन्युरिति त ऽएतं वज्रमपश्यन्नमुमेवाऽऽदित्यमसौ वा ऽआदित्य ऽएषोऽश्वस्त ऽएतेन वज्रेण दक्षिणतो रक्षाꣳसि नाष्ट्रा ऽअपहत्याऽभयेऽनाष्ट्रऽएतं यज्ञमतन्वत तथैवैतद्यजमान ऽएतेन वज्रेण

* का० श्रौ० सू० १६. २. ४।

दक्षिणतो रक्षाꣳसि नाष्ट्रा ऽअपहत्त्याऽभयेऽनाष्ट्र ऽएतं यज्ञं तनुते ॥२९॥ दक्षिणत ऽआहवनीयो भवति। *उत्तरत ऽएषाऽभ्रिरुपशेते व्वृषा वा ऽआहवनीयो योषाऽभ्रिर्द्दक्षिणतो वै व्वृषा योषामुपशेतेऽरत्निमात्रेऽरत्निमात्राद्धि व्वृषा योषामुपशेते ॥ ३० ॥ सा व्वैणवी स्यात्। अग्निर्द्देवेब्भ्य ऽउदक्रामत्स व्वेणुं प्राऽऽविशत्तस्म्मात्स सुषिरꣳ स ऽएतानि व्वर्म्माण्ण्यभितोऽकुरुत पर्व्वाण्ण्यननुप्प्रज्ञानाय यत्र-यत्र निर्द्ददाह तानि कल्माषाण्ण्यभवन् ॥ ३१ ॥ सा कल्माषी स्यात्। सा ह्याग्नेयी यदि कल्माषीं न व्विन्देदप्प्यकल्माषी स्यात्सुषिरा तु स्यात्सैवाऽऽग्नेयी सैषा योनिरग्नेर्य्यद्वेणुरग्निरियं मृन्न वै योनिर्ग्गर्ब्भꣳ हिनस्त्यहिꣳसायै योनेर्व्वै जायमानो जायते योनेर्ज्जायमानो जायाता ऽइति ॥ ३२ ॥ प्रादेशमात्री स्यात्। प्रादेशमात्रꣳ हीदमभि व्वाग्वदत्त्यरत्निमात्री त्त्वेव भवति बाहुर्व्वा ऽअरत्निर्ब्बाहुन्नो वै व्वीर्य्यं क्रियते व्वीर्य्यसम्मितैव तद्भवति ॥ ३३ ॥ अन्यतः †क्ष्णुत्स्यात्। अन्यतरतो हीदं व्वाचः क्ष्णुतमुभयतः क्ष्णुत्त्वेव भवत्युभयतो हीदं व्वाचः क्ष्णुतं यदेनया देवं च व्वदति मानुषं चाऽथो यत्सत्यं चाऽनृतं च तस्म्मादुभयतःक्ष्णुत् ॥ ३४ ॥ यद्वेवोभयतःक्ष्णुत्। अतो वा ऽअब्भ्रेर्व्वीर्य्यं यतोऽस्यै क्ष्णुतमुभयत ऽएवाऽस्यामेतद्वीर्य्यं दधाति ॥ ३५ ॥ यद्वेवोभयतःक्ष्णुत्। एतद्वा ऽएनं देवा ऽअनु-

* का० श्रौ० सू० १६. २.५।

† "उभयतः क्ष्णूमन्यतरः क्ष्णूं वा" ( आप० श्रौ० सू० १६. १. ७ )।

विद्येभ्यो लोकेभ्योऽखनँस्तथैवैनमयमेतदनुविद्येभ्यो लोकेभ्यः खनति ॥ ३६ ॥ स यदिति खनति । तदेनमस्माँल्लोकात्खनत्यथ यदूर्ध्वोञ्चरति तदमुष्माल्लोकादथ यदन्तरेण सञ्चरति तदन्तरिक्षलोकात्सर्वेभ्य ऽएवैनमेतदेभ्यो लोकेभ्यः खनति ॥ ३७ ॥ * तामादत्ते । देवस्य[1] त्वा सवितुः प्रसवेऽश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्यामाददे गायत्रेण च्छन्दसाऽङ्गिरस्वदि'ति सवितृप्रसूतऽएवैनामेतदेताभिर्देवताभिरादत्ते गायत्रेण च्छन्दसाऽथोऽस्यां गायत्रं छन्दो दधाति 'पृथिव्याः[2] सधस्थादग्निं पुरीष्यमङ्गिरस्वदाभरे'ति पशवो वै पुरीषं पृथिव्या ऽउपस्थादग्निं पशव्यमग्निवदाभरेत्येत'त्त्रैष्टुभेन[3] च्छन्दसाऽङ्गिरस्वदि'ति तदेनां त्रैष्टुभेन च्छन्दसाऽऽदत्तेऽथोऽस्यां त्रैष्टुभं छन्दो दधाति ॥ ३८ ॥ 'अभ्रिरसी[4]'ति । अभ्रिर्ह्येषा तदेनᳪं सत्येनाऽऽदत्ते 'नार्यसीति[5]' वज्रो वा ऽअभ्रिर्योषा नारी न वै योषा कञ्चन हिनस्ति शमयत्येवैनामेतदहिᳪंसायै 'त्वया[6] वयमग्निᳪं शकेम खनितुᳪं सधस्थ ऽए'तीदं वै सधस्थं त्वया वयमग्निᳪं शकेम खनितुमस्मिन्त्सधस्थऽइत्येत'ज्जागतेन[7] च्छन्दसाऽङ्गिरस्वदि'ति तदेनां जागतेन छन्दसाऽऽदत्तेऽथो ऽअस्यां जागतं छन्दो दधाति ॥ ३९ ॥ त्रिभिरादत्ते । त्रिवृदग्निर्यावानग्निर्यावत्यस्य मात्रा तावतै-

* का० श्रौ० सू० १६. २. ८ क०।

(१) शु० सं० अ० ११ क० ९। (२) शु० सं० अ० ११ क० ९। (३) शु० सं० अ० ११ क० ९। (४) शु० सं० अ० ११ क० १०। (५) शु० सं० अ० ११ क० १०। (६) शु० सं० अ० ११ क० १०। (७) शु० सं० अ० ११ क० १०।

वैनामतद्वादत्ते त्रिभिरादायाऽथैनां * चतुर्त्थेनाऽभिमन्त्रयत-ऽएतद्वा ऽएनां देवास्त्रिभिरादायाऽथाऽस्यां चतुर्त्थेन व्वीर्य्य-मदधुस्तथैवैनामयमेतत्त्रिभिरादायाऽथाऽस्यां चतुर्त्थेन व्वीर्य्यं दधाति ॥ ४० ॥ 'हस्त ऽआधाय सविते'ति । हस्ते ह्यस्या-ऽऽहिता भवति 'बिभ्रदभ्रिमि'ति बिभर्त्ति ह्येनाᳯं 'हिरण्यय-यीमि'ति हिरण्मयी ह्येषा या छन्दोम'स्यग्नेर्ज्योतिर्न्निचाय्ये'-त्यग्नेर्ज्योतिर्दृष्ट्वेत्येत'त्पृथिव्व्या ऽअध्याभरदि'ति पृथिव्व्यै ह्येनदध्याभर'त्यानुष्टुभेन च्छन्दसाऽङ्गिरस्वदि'ति तदेना-मानुष्टुभेन च्छन्दसाऽऽदत्तेऽथो ऽअस्यामानुष्टुभं छन्दो दधाति तान्न्येतान्न्येव छन्दाᳯंस्येषाऽभ्रिरारम्भायैवेयं व्वैणवी क्रियते ॥ ४१ ॥ ताᳯं हैके † हिरण्मयीं कुर्वन्ति । हिरण्य-यीति वा ऽअभ्युक्तेति न तथा कुर्य्याद्यद्वा ऽएषा छन्दाᳯं-सि तेनैषा हिरण्ययममृतᳯं हिरण्ययममृतानि च्छन्दाᳯंसि ॥ ४२ ॥ तां चतुर्भिरादत्ते । चतुरक्षरा वै सर्वा व्वाग् व्वागि-त्येकमक्षरमक्षरमिति त्र्यक्षरं तद्यत्तद्वागित्येकमक्षरं यैवैषा-ऽनुष्टुबुत्तमा सा साऽथ यदक्षरमिति त्र्यक्षरमेतानि तानि पूर्वाणि यजूᳯंषि सर्व्वयैवैतद्वाचाऽग्निं खनति सर्व्वया व्वाचा सम्भरति तस्माच्चतुर्भिः ॥ ४३ ॥ यद्वेव चतुर्भिः । चतस्रो वै दिशश्चतसृषु तद्दिक्षु व्वाचं दधाति तस्माच्चत-

* का० श्रौ० सू० १३. २. ८ ख।

(१) शु० सं० अ० ११ क० ११। (२) शु० सं० अ० ११ क० ११। (३) शु० सं० अ० ११ क० ११। (४) शु० सं० अ० ११ क० ११। (५) शु० सं० अ० ११ क० ११। (६) शु० सं० अ० ११ क० ११।

† का० श्रौ० सू० १६. २. ६।

सर्वासु दिक्षु वाग्वदति छन्दोभिश्च यजुर्भिश्चाऽऽदत्ते तदष्टौ चतस्रो दिशश्चतस्रोऽवाऽन्तरदिशः सर्वासु तद्दिक्षु वाचं दधाति तस्मात्सर्वासु दिक्षु वाग्वदति ॥ ४४ ॥ (A)

तृतीयाध्याये प्रथमं ब्राह्मणम् ॥ १ ॥



[ अश्वादि-पञ्चपशूनामभिमन्त्रणादि ]

हस्त ऽएषाऽभ्रिर्भवत्यथ पशूनभिमन्त्रयते । एतद्वाऽएषु देवा ऽअन्वेषिष्यन्तः पुरस्ताद्वीर्यमदधुस्तथैवैष्वय-मेतदन्वेषिष्यन्पुरस्ताद्वीर्यं दधाति ॥ १ ॥ † सोऽश्वमभि-मन्त्रयते । 'प्रतूर्त्तं वाजिन्नाद्रवे'ति[1] यद्वै क्षिप्रं तत्तूर्त्तमथ यत्क्षिप्रात्क्षेपीयस्तत्प्रतूर्त्तं 'वरिष्ठामनु संवतमि'[2]तीयं वै वरिष्ठा संवदिमामनु संवतमित्येत'द्दिवि ते जन्म परम-[3]मन्तरिक्षे तव नाभिः पृथिव्यामधि योनिरिदि'ति तदेन-मेता देवताः करोत्यग्निं वायुमादित्यं तदश्वे वीर्यं दधाति ॥ २ ॥ अथ रासभम् । 'युञ्जाथाᳬं रासभं युवमि'[4]त्यध्वर्युं चैतद्यजमानं चाहा'ऽस्मिन्यामे वृषण्वसू'[5] ऽइत्यस्मि-न्कर्म्मणि वृषण्वसू ऽइत्येत'दग्निं भरन्तमस्मयुमि'[6]त्यग्निं भरन्तमस्मत्प्रेषितमित्येतत्तद्रासभे वीर्यं दधाति ॥ ३ ॥ अथाऽजम् । 'योगे-योगे तवस्तरं वाजे-वाजे हवामह'[7]

(A) एतद्ब्राह्मणस्था विषया अन्यत्राऽप्युपलभ्यन्ते यथा— का० श० ८. ३. १; कठ० १५. ११. १६, १; मै० सं० ११. ७. १; तै० सं० ४. १. १।

† का० श्रौ० सू० १६. २. ९।

(१) शु० सं० अ० ११ क० १२। (२) शु० सं० अ० ११ क० १२। (३) शु० सं० अ० ११ क० १२। (४) शु० सं० अ० ११ क० १३। (५) शु० सं० अ० ११ क० १३। (६) शु० सं० अ० ११ क० १३। (७) शु० सं० अ० ११ क० १४।

ऽइत्यन्नं वै वाजः कर्म्मणि-कर्म्मणि तवस्तरमन्नेऽन्ने हवा-
मह ऽइत्येत'त्सखाय ऽइन्द्रमूतय ऽइतीन्द्रियवन्तमूतय-
ऽइत्येतत्तदजे वीर्य्यं दधाति ॥ ४ ॥ त्रिभिरभिमन्त्रयते । त्रि-
वृदग्निर्य्यावानग्निर्य्यावत्त्यस्य मात्रा तावतैवैष्वेतद्वीर्य्यं दधाति
॥ ५ ॥ अथैनान्प्राच ऽउत्क्रमयति । तदेनमेतैः पशुभिर-
न्न्विच्छति नोपस्पृशत्यग्निरेष यत्पशवो नेन्न्माऽयमग्नि-
र्हिनसदिति ॥ ६ ॥ सो*ऽश्वमुत्क्रमयति । 'प्रतूर्वन्[2]नेह्यव-
क्रामन्नशस्तीरि'ति पाप्मा वा ऽअशस्तिस्त्वरमाण ऽएह्य-
वक्रामन् पाप्मानमित्येत'द्रुद्र[3]स्य गाणपत्यं मयोभूरेही'ति
रौद्रा वै पशवो या ते देवता तस्यै गाणपत्यं मयोभूरे-
हीत्येतत्तदेनमश्वेनाऽन्न्विच्छति ॥ ७ ॥ अथ रासभम् ।
'उर्वन्त[4]रिक्षं वीहि स्वस्तिगव्यूतिरभयानि कृण्वन्नि'ति
यथैव यजुस्तथा बन्धुः 'पूष्णा[5] सयुजा सहे'तीयं वै पूषा-
ऽनया सयुजा सहेत्येतत्तदेनं रासभेनाऽन्न्विच्छति ॥ ८ ॥
अथाऽजम् । 'पृथिव्याः सं[6]धस्थादग्निं पुरीष्यमङ्गिर-
स्वदाभरे'ति पृथिव्या ऽउपस्थादग्निं पशव्यमग्निवदाभ-
रेत्येतत्तदेनमजेनाऽन्न्विच्छति ॥ ९ ॥ त्रिभिरन्न्विच्छति ।
त्रिवृदग्निर्य्यावानग्निर्य्यावत्त्यस्य मात्रा तावतैवैनमेतदन्वि-
च्छति त्रिभिः पुरस्तादभिमन्त्रयते तत्षट् षडृतवः संव-

---

(१) शु० सं० अ० ११ क० १४।

* का० श्रौ० सू० १६. २. १०।

(२) शु० सं० अ० ११ क० १५। (३) शु० सं० अ० ११ क० १५। (४) शु० सं० अ० ११ क० १५। (५) शु० सं० अ० ११ क० १५। (६) शु० सं० अ० ११ क० १६।

त्सरः संवत्सरोऽग्निर्यावानग्निर्यावत्यस्य मात्रा तावत्तद्भवति ॥१०॥ (B)

## तृतीयाध्याये द्वितीयं ब्राह्मणम् ॥ २ ॥

माध्यन्दिनीये शतपथब्राह्मणे द्वितीयः प्रपाठकः ॥ २ ॥
कण्डिकासंख्या ॥ १०४ ॥



### [ पिण्डम्प्रति ब्रह्मादीनामभिगमनादि ]

प्रदीप्ता ऽएतेऽग्नयो भवन्ति । अथ मृदमुच्छयन्तीमे वै लोका ऽएतेऽग्नयस्ते यदा प्प्रदीप्ता ऽअथैत ऽइमे लोकाः पुरो वा ऽएतदेभ्यो लोकेभ्योऽग्रे देवाः कर्म्माऽन्वैच्छँस्तद्यदेतानग्नीनतीत्य मृदमाहरति तदेनं पुरैभ्यो लोकेभ्योऽन्विच्छति ॥ १ ॥ प्राञ्चो यन्ति । प्राची हि दिगग्नेः स्वायामेवैनमेतद्दिश्यन्विच्छति स्वायां दिशि विन्दति ॥ २ ॥ ते * प्प्रयन्ति । 'अग्निं पुरीष्यमङ्गिरस्वदुच्छेम' ऽइत्यग्निं पशव्यमग्निवदुच्छेम ऽइत्येतत् ॥ ३ ॥ † अथाऽनड्वापुरुषमीक्षते । 'अग्निं पुरीष्यमङ्गिरस्वद्भरिष्याम' ऽइत्यग्निं पशव्यमग्निवद्भरिष्याम ऽइत्येतत्तदेनमनड्वापुरुषेणाऽन्विच्छति ॥ ४ ॥ अथ ‡ वल्मीकवपा सुषिरा

(B) एतद्ब्राह्मणस्था विषया अन्यत्राऽप्युपलभ्यन्ते यथा—का० श० ८. ३. २; कठ० सं० १८. १६, १-३; मै० सं० ११. ७. २; तै० सं० ४. १. २।

* का० श्रौ० सू० १६. २. ११।

(१) शु० सं० अ० ११ क० १५।

† का० श्रौ० सू० १६. २. १३।

(२) शु० सं० अ० ११ क० १६।

‡ का० श्रौ० सू० १६. २. १४।

ऽव्यङ्क्ते निहिता भवति । तामन्वीक्षत ऽइयं व्वै व्वल्मीक-
व्वपेयमु व्वा ऽइमे लोका ऽएतद्वा ऽएनं देवा ऽएषु लोकेषु
व्विग्राहमैच्छँस्तथैवैनमयमेतदेषु लोकेषु व्विग्राहमिच्छति
॥ ५ ॥ 'अन्वग्निरुषसामग्रमख्यदि'ति । तदेनमुषः स्वै-
च्छ'न्नन्वहानि प्प्रथमो जातवेदा' ऽइति तदेनमहः स्वैच्छ-
न्ननु सूर्य्यस्य पुरुत्रा च रश्मीनि'ति तदेनः सूर्य्यस्य
रश्मिष्वैच्छ'न्ननु द्यावापृथिवी ऽआततन्थे'ति तदेनं द्यावा-
पृथिव्योरैच्छँस्तमविन्दँस्तथैवैनमयमेतद्विन्दति तं ऽयदा
परापश्यत्यथ तामवाऽस्यत्यागच्छन्ति मृदम् ॥६॥ * अथा-
ऽश्वमभिमन्त्रयते । एतद्वै देवा ऽअब्रुवन्पाप्मानमस्याऽपह-
नामेति श्रमो वै पाप्मा श्रममस्य पाप्मानमपहनामेति
तस्य श्रमं पाप्मानमपाऽघ्नँस्तथैवाऽस्याऽयमेतच्छ्रमं पाप्मा-
नमपहन्ति ॥ ७ ॥ 'आगत्य व्वाज्यद्ध्वानमि'ति । आगतो
ह्यस्याऽद्ध्वा भवति 'सर्व्वा मृधो व्विधूनुत' ऽइति पाप्मा वै
मृधः सर्व्वान्पाप्मनो व्विधूनुत ऽइत्येतत्तस्मादु हैतदश्वः
† स्यत्त्वा 'व्विधूनुतेऽग्निः सधस्थे महति चक्षुषा निचि-
कीष' ऽइतीदं व्वै महत्सधस्थमग्निमस्मिन्महति सधस्थे
चक्षुषा दिदृक्षत ऽइत्येतत् ॥ ८ ॥ अथैनमाक्रमयति ।
एतद्वा ऽएष ऽएतं देवेभ्योऽनुविद्य प्प्राऽब्रवीद्यथाऽयमिहेवे-

(१) शु० सं० अ० ११ क० १७। (२) शु० सं० अ० ११ क० १७। (३) शु० सं० अ० ११ क० १७। (४) शु० सं० अ० ११ क० १७।

* का० श्रौ० सू० १६. २. १६।

† 'स्यन्त्वा' इति पाठः 'ग च' पुस्तकयोः।

(५) शु० सं० अ० ११ क० १८। (६) शु० सं० अ० ११ क० १८। (७) शु० सं० अ० ११ क० १८।

त्येवम् ॥ ९ ॥ षड्वेवाऽऽक्रमयति । एतद्वै देवा ऽअबिभयुर्यद्वै न ऽइममिह रक्षाꣳसि नाष्ट्रा न हन्न्युरिति तस्स्माऽएतं व्वज्ज्रमुपरिष्टादभिगोप्तारमकुर्वन्नमुमेवाऽऽदित्त्यमसौ वा ऽआदित्त्य ऽएषोऽश्वस्तथैवाऽऽस्म्माऽअयमेतं व्वज्रमुपरिष्टादभिगोप्तारं करोति ॥ १० ॥ * 'आक्क्रम्म्य व्वाजिन् । पृथिवीमग्निमिच्छ रुचा त्वमि'ति चक्षुर्वै रुगाक्क्रम्म्य त्वं व्वाजिन्न्पृथिवीमग्निमिच्छ चक्षुषेत्त्येत'द्भूम्म्या² व्वृत्त्वाय नो ब्रूहि यतः खेनम तं वयमि'ति भूमेस्तत्त्स्पाशयित्त्वाय नो ब्रूहि यत ऽएनं खनेमेत्त्येतत् ॥ ११ ॥ अथैनमुन्म्मृशाति † । एतद्वा ऽएनं देवाः प्प्रोचिवाꣳसं व्वीर्य्येण समार्द्धयँस्तथैवैनमयमेतत्त्प्रोचिवाꣳसं व्वीर्य्येण समर्द्धयति 'द्यौस्ते³ पृष्ठं पृथिवी सधस्त्थमात्त्माऽन्तरिक्षꣳ समुद्रो योनिरि'तीत्त्थमसीत्त्थमसीत्त्येवैतदाह 'व्विख्याय⁴ चक्षुषा त्वमभितिष्ठ पृतन्न्यत' ऽइति व्विख्याय चक्षुषा त्वमभितिष्ठ सर्वान्न्पाप्प्मन ऽइत्त्येतन्नोपस्प्पृशाति व्वज्ज्रो वा ऽअश्वो नेन्न्माऽयं व्वज्ज्रो हिनसदिति ॥ १२ ॥ अथैनमुत्क्रमयति ‡ । एतद्वै देवा ऽअब्रुवन्न्किमिममभ्युत्क्रमिष्याम ऽइति महत्सौभगमिति तं महत्सौभगमभ्युदक्रमयँस्तथैवैनमयमेतन्न्महत्सौभगमभ्युत्क्रमय- '⁵त्युत्क्राम महते सौभगाये'त्युत्क्राम महते सौभगमित्त्येत-

* का० श्रौ० सू० १६. २. १७ ।

( १ ) शु० सं० अ० ११ क० १९ । ( २ ) शु० सं० अ० ११ क० १९ ।

† का० श्रौ० सू० १६. २. १८ ।

( ३ ) शु० सं० अ० ११ क० २० । ( ४ ) शु० सं० अ० ११ क० २० ।

‡ का० श्रौ० सू० १६. २. १९ ।

( ५ ) शु० सं० अ० ११ क० २१ ।

त्तस्मादु हैतदश्वः पशूनां भगितमोऽस्म्मादास्त्थानादि'ति यत्रैतत्तिष्ठसीत्त्येतद् 'द्रविणोदा[2]' ऽइति द्रविणꣳ ह्येभ्यो ददाति 'वाजिन्निति[3]' वाजी ह्येष 'वयꣳ[4] स्याम सुमतौ पृथिव्व्या ऽअग्निं[5] खनन्त ऽउपस्त्थे ऽअस्या' ऽइति वयमस्यै पृथिव्व्यै सुमतौ स्यामाऽग्निमस्या ऽउपस्त्थे खनन्त-ऽइत्त्येतत् ॥ १३ ॥ अथैनमुत्क्क्रान्तमभिमन्त्रयते * । एतद्वा-ऽएनं देवाः प्प्रोचिंवाꣳसं यथा ददिवाꣳसं वन्देतैवमुपाऽस्तु-वन्नुपाऽमहयꣳस्तथैवैनमयमेतदुपस्तौत्त्युपमहय'त्त्युदक्रमीदि[6]'-त्युद्ध्यक्रमीद् 'द्रविणोदा[7]' ऽइति द्रविणꣳ ह्येभ्यो ददाति 'वाज्ज्यर्वे[8]'ति वाजी च ह्येषोऽर्वा चा'ऽकः सुलोकꣳ सुकृतं पृथिव्व्यामि'त्त्यकरः सुलोकꣳ सुकृतं पृथिव्व्यामित्त्येत-'त्ततः खनेम[9] सुप्प्रतीकमग्निमि'ति तत ऽएनं खनेमेत्त्ये-तत्सुप्प्रतीकमिति सर्वतो वा ऽअग्निः सुप्प्रतीकः 'स्वोरु-[10]हाणा ऽअधि नाकमुत्तममि'ति स्वर्ग्गो वै लोको नाकः स्वर्ग्गं लोकꣳ रोहन्तोऽधि नाकमुत्तममित्त्येतत्तं दक्षिणतोप-सङ्क्रमयति यत्रेतरौ पशू भवतस्ते दक्षिणतः प्प्राञ्चस्ति-ष्ठन्ति स य ऽएवाऽमुत्र दक्षिणत स्त्थानस्य बन्धुः सोऽत्र ॥१४॥ अथोपविश्श्य मृदमभिजुहोति। एतद्वै देवा ऽअब्रुवꣳश्चे-

(१) शु० सं० अ० ११ क० २१। (२) शु० सं० अ० ११ क० २१। (३) शु० सं० अ० ११ क० २१। (४) शु० सं० अ० ११ क० २१। (५) शु० सं० अ० ११ क० २१।

* का० श्रौ० सू० १६. २. २०।

(६) शु० सं० अ० ११ क० २२। (७) शु० सं० अ० ११ क० २२। (८) शु० सं० अ० ११ क० २२। (९) शु० सं० अ० ११ क० २२। (१०) शु० सं० अ० ११ क० २२।

तयद्ध्वमिति चितिमिच्छतेति वाऽव तदब्रुवँस्ते चेतयमानाऽएतामाहुतिमपश्यँस्तामजुहवुस्ताᳬं हुत्त्वेमाँल्लोकानुखामपश्यन् ॥ १५ ॥ तेऽब्रुवन् । चेतयद्ध्वमेवेति चितिमिच्छतेति वाऽव तदब्रुवँस्ते चेतयमाना ऽएतां द्वितीयामाहुतिमपश्यँस्तामजुहवुस्ताᳬं हुत्त्वा विश्वज्ज्योतिषोऽपश्यन्नेता देवता ऽअग्निं वायुमादित्त्यमेता ह्येव देवता विश्वज्ज्योतिस्तथैवैतद्यजमान ऽएते ऽआहुती हुत्त्वेमाँश्च लोकानुखां पश्यत्त्येताश्च देवता विश्वज्ज्योतिषो व्व्यतिषक्ताभ्यां जुहोतीमाँश्च तल्लोकानेताश्च देवता व्व्यतिषजति ॥ १६ ॥ षड्ढैवैते ऽआहुती जुहोति । मृदं च तदपश्च प्प्रीणाति ते ऽइष्ट्वा प्प्रीत्त्वाऽथैने सम्भरति व्व्यतिषक्ताभ्यां जुहोति मृदं च तदपश्च व्व्यतिषजति ॥ १७ ॥ आज्येन * जुहोति । व्वज्रो वा ऽआज्यं व्वज्रमेवाऽस्मा ऽएतदभिगोप्तारं करोत्त्यथो रेतो वा ऽआज्यᳬं रेत ऽएवैतत्त्सिञ्चति स्रुवेण व्वृषा वै स्रुवो व्वृषो वै रेतः सिञ्चति स्वाहाकारेण व्वृषा वै स्वाहाकारो व्वृषा वै रेतः सिञ्चति ॥ १८ ॥ ‘आ त्त्वा[1] जिघर्म्मि मनसा घृतेने’ति । आत्त्वा जुहोमि मनसा च ‘घृतेन[2]’ चेत्त्येत‘त्त्प्रतिक्षियन्तं[3] भुवनानि विश्वे’ति प्प्रत्त्यङ् ह्येष सर्व्वाणि भुवनानि क्षियति ‘पृथुं तिर्[4]श्चा व्वयसा बृहन्तमि’ति पृथुर्व्वा ऽएष तिर्य्यङ्व्वयसो बृहन्धूमेन ‘व्व्यचिष्ठ[5]मन्नै रभसं दृशानमि’त्त्यवकाशवन्तमन्नैरन्नादं दीप्प्यमानमित्त्येतत् ॥१९॥

* का० श्रौ० सू० १६. २. २२ क।

(१) शु० सं० अ० ११ क० २३। (२) शु० सं० अ० ११ क० २३। (३) शु० सं० अ० ११ क० २३। (४) शु० सं० अ० ११ क० २३। (५) शु० सं० अ० ११ क० २३।

'आ विश्वतः प्रत्यञ्चं जिघर्म्मी'ति । आ सर्वतः प्रत्यञ्चं जुहोमीत्येतद् 'रक्षसा मनसा[2] तज्जुषेते'त्यहीड़मानेन मनसा तज्जोषयेतेत्येत'न्मर्य्यश्री स्पृहयद्वर्णो[3] ऽअग्निरि'ति मर्य्यश्रीर्ह्येष स्पृहयद्वर्णोऽग्नि'र्नाऽभिमृशे[4] तन्न्वा जर्भुराण' ऽइति न ह्येषोऽभिमृशे तन्न्वा दीप्यमानो भवति ॥ २० ॥ द्वाभ्यामभिजुहोति । द्विपाद्यजमानो यजमानोऽग्निर्य्यावानग्निर्य्यावत्यस्य मात्रा तावतैवैनमेतद्रेतो भूतꣳ सिञ्चत्याग्नेयीभ्यामग्निमेवैतद्रेतो भूतꣳ सिञ्चति ते यदाग्नेय्यौ तेनाऽग्निरथ यत्त्रिष्टुभौ तेनेन्द्र ऽऐन्द्राग्नोऽग्निर्य्यावानग्निर्य्यावत्यस्य मात्रा तावतैवैनमेतद्रेतो भूतꣳ सिञ्चतीन्द्राग्नी वै सर्वे देवाः सर्वदेवत्योऽग्निर्य्यावानग्निर्य्यावत्यस्य मात्रा तावतैवैनमेतद्रेतो भूतꣳ सिञ्चति ॥ २१ ॥ * अश्वस्य † पदे जुहोति । अग्निरेष यदश्वस्तथो हाऽस्यैते ऽअग्निमत्येवाऽऽहुती हुते भवतः ॥ २२ ॥ अथैनं परिलिखति । मात्रामेवाऽस्मा ऽएतत्करोति यथैतावानसीत्येवम् ॥ २३ ॥ यद्वेवैनं परिलिखति । एतद्वै देवा ऽअबिभयुर्य्यद्वै नऽइममिह रक्षाꣳसि नाष्ट्रा न हन्न्युरिति तस्माऽएतां पुरं पर्य्यश्रयꣳस्तथैवाऽस्मा ऽअयमेतां पुरं परिश्रयत्यभ्र्या वज्रो वा ऽअभ्रिर्वज्रमेवाऽस्मा ऽएतदभिगोप्तारं करोति सर्वतः परिलिखति सर्वत ऽएवाऽस्मा ऽएतं

(१) शु० सं० अ० ११ क० २४। (२) शु० सं० अ० ११ क० २४।
(३) शु० सं० अ० ११ क० २४। (४) शु० सं० अ० ११ क० २४।

* अत्र शतम् ३६००।

† का० श्रौ० सू० १६. २. २२. ख।

व्रज्जमभिगोप्तारं करोति त्रिष्कृत्त्वः * परिलिखति त्रिवृतमेवाऽस्मा ऽएतं व्रज्जमभिगोप्तारं करोति ॥ २४ ॥ 'परिवाजपतिः कविः । परि त्वाऽग्ने पुरं वयं, त्वमग्ने द्युभिरि'त्यग्निमेवाऽस्मा ऽएतदुपस्तुत्य वर्म्म करोति परिवतीभिः परीव हि पुर ऽआग्नेयीभिरग्निपुरामेवाऽस्मा ऽएतत्करोति सा हैषाऽग्निपुरा दीप्प्यमाना तिष्ठति तिसृभिस्त्रिपुरमेवाऽस्मा ऽएतत्करोति तस्स्मादु हैतत्पुरां परमꣳ रूपं यत्त्रिपुरꣳ स वै वर्षीयसा-वर्षीयसा च्छन्दसा परां-परां लेखां वरीयसीं करोति तस्स्मात्पुरां परां-परा वरीयसी लेखा भवन्ति लेखा हि पुरः ॥ २५ ॥ अथैनमस्यां खनति । एतद्वै देवा ऽअबिभयुर्य्यद्वै न ऽइममिह रक्षाꣳसि नाष्ट्रा न हन्न्युरिति तस्स्मा ऽइमामेवाऽऽत्मानम कुर्वन्गुप्त्या ऽआत्माऽऽत्मानं गोप्प्स्यतीति सा समंबिला स्यात्तदस्येयमात्मा भवति यद्वेव समम्बिला योनिर्व्वा ऽइयꣳ रेत ऽइदं यद्वै रेतसो योनिमतिरिच्च्यतेऽमुया तद्भवत्यथ यन्न्यूनं व्यृद्धं तदेतद्वै रेतसः समृद्धं यत्समम्बिलं चतुःस्त्रक्तिरेष कूपो भवति चतस्रो वै दिशः सर्व्वाभ्य ऽएवैनमेतद्दिग्भ्यः खनति ॥ २६ ॥ (c)

तृतीयाध्याये तृतीयं ब्राह्मणम् ॥ ३ ॥

इति तृतीयोऽध्यायः ॥ ३ ॥



---

* का० श्रौ० सू० १६. २. २३ ।

( १ ) शु० सं० अ० ११ क० २५-२७ ।

(c) एतद्ब्राह्मणस्था विषया अन्यत्राऽप्युपलभ्यन्ते यथा— का० श० ८. ३. २; कठ० सं० १९. १. ३; कपि० सं० ३०. १; मै० सं० ११. ७. २; तै० सं० ४. १. २ ।

[ मृत्खननम्, कृष्णाजिनास्तरणम्, पुष्करपर्णनिधानादिकं च ]

अथैनमतः * खनत्येव । एतद्वा ऽएनं देवा ऽअनुविद्याऽखनँस्तथैवैनमयमेतदनुविद्य खनति 'देवस्य त्वा सवितुः प्रसवेऽश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्यां पृथिव्याः सधस्थादग्निं पुरीष्यमङ्गिरस्वत्खनामी'ति सवितृप्रसूत ऽएवैनमेतदेताभिर्देवताभिः पृथिव्या ऽउपस्थादग्निं पशव्यमग्निवत्खनति ॥ १ ॥ 'ज्योतिष्मन्तं त्वाऽग्ने सुप्रतीकमि'ति । ज्योतिष्मान्वा ऽअयमग्निः सुप्रतीको-ऽजस्रेण भानुना दीद्यतमि'त्यजस्रेणाऽर्चिषा दीप्यमानमित्येत'च्छिवं प्रजाभ्योऽहिंसन्तं पृथिव्याः सधस्थादग्निं पुरीष्यमङ्गिरस्वत्खनाम' ऽइति शिवं प्रजाभ्योऽहिंसन्तं पृथिव्या ऽउपस्थादग्निं पशव्यमग्निवत्खनाम ऽइत्येतत् ॥ २ ॥ द्वाभ्यां खनति । द्विपाद्यजमानो यजमानोऽग्निर्यावानग्निर्यावत्यस्य मात्रा तावतैवैनमेतत्खनत्यथो द्वयꣳ ह्येवैतद्रूपं मृच्चाऽऽपश्च ॥३॥ स वै खनामि खनाम ऽइति खनति । खनामीति वा ऽएतं प्रजापतिरखनत्खनाम ऽइति देवास्तस्मात्खनामि खनाम ऽइति ॥ ४ ॥ स वा ऽअभ्र्या खनन् । वाचा खनामि खनामऽइत्याह वाग्वा ऽअभ्रिरारम्भायैवेयं वैणवी क्रियते वाचा वा ऽएतमभ्र्या देवा ऽअखनँस्तथैवैनमयमेतद्वाचैवाऽभ्र्या

* का० श्रौ० सू० १६. २. २४।

(१) शु० सं० अ० ११ क० २८। (२) शु० सं० अ० ११ क० २८। (३) शु० सं० अ० ११ क० २८। (४) शु० सं० अ० ११ क० २८। (५) शु० सं० अ० ११ क० २८।

